त्याद्युक्ता ऐन्द्रचान्द्रादिव्याकृतिकर्तारः महेन्द्रादयो देवा वा यस्य शब्दवारिधेः शब्दसमुद्रस्य अन्तं परं पारमियत्तया परिच्छेदं न ययुः न प्रापुः । तथा च श्रुतिः " दिव्यं वर्षसहस्रं च किलेन्द्राय बृहस्पतिः ॥ परायणं प्रोवाच नान्तं जगाम ॥ " इति तस्य कृत्स्नस्य समस्तस्य प्रक्रियां वक्तुं नरो मादृङ् मनुष्यः कथं क्षमः समर्थः । अपिः कैमुतिकन्यायसंसूचनार्थः व्यासवाल्मीक्याद्यनुक्तसमुच्चयार्थो वा । अयमभिसन्धिः । यदा वाचस्पत्यादयो वक्तारः इन्द्रादयश्चाध्येतारः दिव्यवर्षसहस्रादिश्च समयस्तथापि प्रतिपदपाठेनापि पारगमनं दुस्तरतरं तद्व्युत्पादनं तदा मादृशमनुष्येण मन्दमतिना मन्दभाग्येनाल्पायुषाऽनन्तविघ्नाभिभूतेन कथङ्कारसर्वशब्दव्युत्पादकं प्रक्रियान्तरं कार्यमित्यतस्तस्या एवानुवादेन ऋजुत्वविधानमुचितमिति ॥ २ ॥

## तत्र तावत्संज्ञा संव्यवहाराय संगृह्यते ॥

संज्ञाविधानमन्तरेण सुखप्रतिपत्त्यसम्भवादाभिधास्यमानसंज्ञासंग्रहं प्रतिजानीते । तत्रेति । तस्मिन्प्रक्रियार्जवे विधेये तावत्प्रथमं संव्यवहाराय सम्यक्शास्त्रप्रवृत्तये । संज्ञा अस्मात्पदादयमर्थो बोध्य इत्येवं सङ्केतरूपा सरस्वती पूर्वाचार्य्यैश्च कृता । मया संगृह्यत इत्यर्थः ॥

**अइउऋऌसमानाः ॥ अनेन प्रत्याहारग्रहणाय वर्णाः परिगण्यन्ते तेषां समानसंज्ञा च विधीयते । नैतेषु सूत्रेषु सन्धिरनुसन्धेयोऽविवक्षितत्वात् । विवक्षितस्तु सन्धिर्भवतीति नियमात् । लौकिकप्रयोगनिष्पत्तये समयमात्रत्वाच्च ॥**

तत्राकारादिक्रमेण वर्णमातृकामप्युपदेष्टुमाद्यसूत्रमाह । अइउ इति । षट्पदमिदं संज्ञासूत्रम् । यद्यपि अकरादीनामर्थस्याविवक्षि-

विश्वं व्याप्नोति विषयानादत्ते इति वा स आत्मा परमश्चासावात्मा चेति परमात्मा कार्यकारणविलक्षणो नित्यशुद्धबुद्धमुक्तस्वभावः तं परमात्मानमिति । पृथक्पदे एव वा । प्रकर्षेण भक्तिश्रद्धातिशयेन नत्वा । प्रथमं प्रकर्षवाचिप्रशब्दप्रयोगः । श्रीशब्दादिवत्स्वरूपतो माङ्गलिकत्वादेतदध्येतॄणां प्रज्ञाप्रकर्षध्वन्यर्थत्वाच्च । पूर्वकालार्थकवाक्यारम्भात्पूर्वमाचरणीयत्वं नत्यादेर्द्योत्यते । ननु " सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धस्तत्प्रयोजनम ॥ यावत्प्रयोजनं नोक्तं सम्बन्धो न निरूप्यते । सम्बन्धानभिधायित्वाद्भ्रष्टा भवति सङ्गतिः " ॥ इति प्रयोजनं वक्तव्यमित्यत आह । किमर्थम् । बालधीवृद्धिसिद्धये इति । बले कामधेनुत्वाद्बलन्ति चलन्ति दुर्बोधार्थादिति बालाः शब्दव्युत्पत्तिरहितास्तेषां धियो वृद्धिर्व्युत्पत्तिस्तयाः सिद्धिर्निष्पत्तिस्तस्यै । अयं भावः । " रक्षोहागमलघ्वसन्देहाः प्रयोजनानि " इत्यादिमहाभाष्योक्तव्याकरणप्रयोजनानाम् " रक्षाद्यपि यदत्रोक्तमन्वाख्यानप्रयोजनम् । न तदप्यन्यतः सिद्धेरल्पासिद्धेस्ततोऽपि वा " इत्यादिना तन्त्रवार्तिककारैरध्ययनादिभिरेव वेदपाठस्यैव रक्षादेरपि तत एव सम्भवान्नातीव प्रयोजनत्वमुक्तमतः केवलं साधुत्वासाधुत्वज्ञानमेव प्रयोजनत्वेन विज्ञायते विचारविशेषश्च विस्तरभयान्नेहोक्तः। अत्र च प्रक्रियार्जवो विषयः, बालव्युत्पत्तिः प्रयोजनम्, जन्यजनकभावः सम्बन्धः, शब्दव्युत्पत्तिर्व्युत्पन्नश्चाधिकारी इत्यनुबन्धचतुष्टयमपि तत्तत्पदैः समसूचि ॥ १ ॥

**इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः ॥**
**प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम् ॥ २ ॥**

ननु पूर्ववत् सर्वशब्दाव्युत्पत्त्यादिकापि प्रक्रिया क्रियतामित्यत आह । इन्द्रादय इति । " इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ॥ पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः " इ-

१ " रहितश्च " इत्यपि काशीमुद्रितपुस्तकपाठः सो० पृ० ।

तत्वात्प्रातिपदिकत्वासम्भवाद्विभक्त्यसम्भवे पदत्वासम्भवस्तथापि वासुदेवादीनामर्थानां सत्त्वात्तदविवक्षामात्रात्प्रातिपदिकसंज्ञानिषेधासम्भवान्निपातस्य चानर्थकस्येति वा प्रातिपदिकत्वाद्विभक्त्युत्पत्तेः पदत्वं तस्याश्च छन्दोवत्सूत्राणि भवन्तीति छान्दसत्वाश्रयणात्सुपां सुलुगिति लुक् । तथोक्तम् " विभक्तेः प्रायशो लोपो वर्णस्य च पदस्य च ॥ सरस्वतीकृते सूक्ते ह्रस्वोक्तौ दीर्घसंग्रहः " बहुवचनं च प्रत्येकसंसिद्ध्यर्थम् । अन्यथा वृक्षा वनमितिवत्समुदायसंज्ञा स्यात् तच्च संज्ञासंज्ञिनोरभेदोपचारात् विसन्धिनिर्देशश्च विष्णुप्रभृत्यर्थान्तरसंस्मरणेन मङ्गलार्थः । यत्तु सन्ध्यकरणमसन्देहार्थं सन्धौ हि सति सकारादीनामपि समानसंज्ञासन्देहः स्यात् । तदयुक्तम् । व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति वचनाद्व्याख्यानेन तत्सन्देहनिरासस्सम्भवात् । अन्यस्त्वस्याद्यसूत्रत्वेन सन्धिसूत्राणामसिद्धत्वात्तदभाव इत्याह । तदप्यसत् । व्याकरणस्यानादित्वेनातोत्युरित्यादाविव सन्धिसम्भवात् । केचित्त्वेषां निपातोक्तपाठान्निपात एकाजनाङिति प्रगृह्यत्वात्प्लुतप्रगृह्या अचीति प्रकृतिभावमाहुः । अपरे तु षट्पदत्वेन वाक्यत्वात् " संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते " ॥ इति वचनाद्विवक्षाऽभावात्सन्ध्यभाव इत्याहुः । एवं चाग्रिमग्रन्थसङ्गतिरपि इतरे तु द्विपदमेव कुर्वते सन्ध्यभावस्तु पूर्वयुक्त्यैवेत्याहुस्तेषामुत्तरग्रन्थविरोधः । ननु समाना इति महासंज्ञाविधानात् समानं तुल्यं मानं परिमाणमित्यन्वर्थत्वाद्भिन्नस्वरूपाणामेषां कथं समानत्वमिति चेत् । सत्यम् । ह्रस्वदीर्घप्लुतोदात्तानुदात्तसमाहारसानुनासिकनिरनुनासिकसंवृतविवृतादिभिरेतैः समानमानत्वादान्वर्थ्यम् । ननु वर्णपरिगणनमन्तरेण संज्ञाविधानानुपपत्तेरर्थैक्यादेकं वाक्यं साकांक्षं चेद्विभागे स्यादित्येकेनानेन वाक्येन वाक्यभेदप्रसङ्गादर्थद्वयप्रतिपादनमयुक्तमित्यत आह । अनेनेति । वर्णपरिगणनस्यानुषङ्गिकत्वादर्थद्वयम् । विधानाभावान्न

वाक्यभेदापत्तिरिति भावः । प्रत्याह्रियते सङ्कोच्यन्ते वर्णा यैः प्रतिकार्यमाह्रियन्ते वा प्रत्याह्रियन्ते सङ्कोच्यन्ते इति वा प्रत्याहारा अबादिसंज्ञास्तेषां ग्रहणायेत्यर्थः । प्रत्याहाराणां संज्ञारूपत्वात्संज्ञासंग्रहान्तःपरिगणनं नाकस्मिकम् । एतेषु सूत्रेष्विति बहुवचनं वक्ष्यमाणसूत्राभिप्रायेण जात्यभिप्रायेण जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामिति वा अवयवावयविनोरभेदोपचारात्सूत्रावयववर्णाभिप्रायेण वा वक्तुमिष्टो विवक्षितः न विवक्षितोऽविवक्षितः तस्य भावस्तत्त्वं तस्मात् । ततः किमत आह । विवक्षितस्त्विति । अत्र यद्यपि सन्धिर्विवक्षित एव भवति विवक्षितः सन्धिरेव भवतीत्युभयथापि नियमासम्भव एकपदादौ विवक्षाभावेऽपि सन्धेरावश्यकत्वात् । इह ईदूदेदन्तानां द्विवचनान्तानामेकस्वराणां निपातानां च शतशो विवक्षायामपि सन्ध्यसम्भवाच्च । तथापि विशेषार्थात्तु शब्दाद्वाक्यविषयत्वं नियमस्यावगम्यते । विवक्षाभावे हेतुमाह । लौकिकेति । लोके भवा लौकिका बालास्तेषां प्रयोगज्ञानाय । अथवा लौकिकप्रयोगा दध्यानयेत्यादयोऽनादिवृद्धप्रयोगास्तत्सिद्धये । समयः सङ्केतस्तन्मात्रत्वादुपदेशेऽजनुनासिक इत्यादौ कुत्वाभाव इवात्रापि सन्ध्यभाव इति भावः । द्विपदत्वपक्षे वायं हेतुः। चकारो निपातत्वादिह हेत्वन्तरसूचनार्थः ॥

**ह्रस्वदीर्घप्लुतभेदाः सवर्णाः ॥ एतेषां ह्रस्वदीर्घप्लुतभेदाः परस्परं सवर्णा भण्यन्ते । लोकाच्छेषस्य सिद्धिरिति वक्ष्यति । ततो लोकत एव ह्रस्वादिसंज्ञा ज्ञातव्या । एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः । व्यञ्जनं चार्द्धमात्रकम् । एषामन्येऽप्युदात्तादिभेदाः सन्ति ॥**

ननु परिगणितानां पञ्चानामेव समानत्वे गङ्गानामित्यादौ दीर्घ-

वर्णादीनां समानकार्यं न स्यादित्यतः सूत्रान्तरमवतारयति । ह्रस्वेति । ह्रस्वश्च दीर्घश्च प्लुतश्च भेदश्च ते । भेदाश्चोदात्तादयः । एतेषामित्यनन्तरोक्तसमानानामित्यर्थः । एवं च हरये इत्यादौ दीर्घत्वाप्रसङ्गः । समाना वर्णाः सवर्णा इत्यन्वर्थताविज्ञानात्समानस्थानप्रयत्नानामेषां सावर्ण्यं परस्परमिति ह्रस्वस्य ह्रस्वदीर्घप्लुतैः दीर्घस्य दीर्घप्लुतह्रस्वैः प्लुतस्य प्लुतह्रस्वदीर्घैः सवर्णत्वं ततश्च वर्णग्रहणे सवर्णस्यापि ग्रहणमिति । ह्रस्वसवर्णानां दीर्घादीनामपि समानत्वात्तत्कार्यं भवत्येवेति भावः । ऋलृवर्णयोः सावर्ण्यस्य च वक्ष्यमाणत्वात् । तयोस्तदंशभेदविबन्धनत्वात् । ननु ह्रस्वादिसंज्ञाविधानमन्तरेण तत्स्वरूपाप्रत्ययात्तत्सावर्ण्यासम्भव इत्यत आह। लोकादिति शेषस्यानुक्तस्य लोकतोऽनादिवृद्धव्यवहारप्रसिद्धः । आदिनोदात्तादिसंज्ञामाह । मीयते इति मात्राऽतिसूक्ष्मसमयावस्था एका मात्रा उच्चारणकालो यस्य स एकमात्रः । एवमपरत्रापि । तदुक्तम् । " एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ॥ त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम् " इति ॥

**उच्चैरुपलभ्यमान उदात्तः ॥ नीचैरनुदात्तः समवृत्त्या स्वरितः ॥**

उच्चैरिति । स्थानविशेषणं न वर्णानाम् । तथा च " अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ॥ जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च " ॥ स्थानानि तेषु चोच्चनीचसमभेदात्त्रयोंऽशास्तत्र नाभिदेशादूर्ध्वमाक्रामदुदानवाय्वभिघाताद्वर्णाभिव्यक्तिस्तत्रोच्चभागेऽभिव्यक्त उदात्तः । नीचभागे अनुदात्तः । समभागेस्वरित इत्यर्थः ।

**एऐओऔ सन्ध्यक्षराणि ॥ ॥ एषां ह्रस्वा न सन्ति ।**

एऐ इति । पञ्चपदं द्विपदं वा पूर्ववत्सन्ध्यभावादि च । सन्धेर्जातानीवाक्षराणि सन्ध्यक्षराणीति योगरूढ्या पङ्कजादिवदवयवव्युत्पत्तिसद्भावादन्वर्थता । अतो नाकारादिसङ्करः । द्विमात्रत्वेन

ह्रस्वभेदाभावः । ह्रस्वा न सन्तीत्युक्त्या च दीर्घप्लुतोदात्तादयो भेदाः सन्तीत्युक्तं भवति । उभये वर्णाः स्वरसंज्ञका भवन्तीत्यर्थः। एवं च अइउऋवर्णानां ह्रस्वोदात्तसानुनासिकादिभेदैरष्टादशभेदभिन्नत्वम् । लृवर्णस्य च दीर्घप्रयोगाभावात् । ( १ ) लृवर्णसन्ध्यक्षराणां द्वादशद्वादशभेदवत्त्वम् । ते च स्वरप्रक्रियायामेवोपयुक्ता इति नात्रोक्ताः ।

**उभये स्वराः ॥ अकारादयः पञ्च चत्वार एकारादयः उभये स्वरा उच्यन्ते ।**

उभये इति । समुदायद्वयपरामर्शकत्वादुभयशब्दप्रयुक्तिस्तस्य च द्विवचनान्तप्रयोगाभावाद्वर्णविवक्षया वा बहुवचनम् । समानसंज्ञकाः सन्ध्यक्षरसंज्ञकाश्चोभये वर्णाः स्वरसंज्ञका भवन्तीत्यर्थः ।

**अवर्जा नामिन ॥ अवर्णवर्णाः स्वरा नामिन उच्यन्ते । अनुक्रान्तास्तावत्स्वराः । प्रत्याहारजिग्राहयिषया व्यञ्जनान्यनुक्रामति ।**

अवर्जा इति । अं अवर्णं वर्जयन्ति त्यजन्तीत्यवर्जाः अवर्णभिन्ना अवर्णत्वरहिता वेत्यर्थः । अत्र केचित्कालानुसारिणश्चतुर्दश स्वरा दश समाना द्वादश नामिन इत्याहुस्तदयुक्तम् । उभयशब्दस्य सर्वनामत्वात्तेषां च बुद्धिस्थप्रकारवाचित्वात् पूर्वोक्तसमानसंज्ञकपञ्चवर्णसन्ध्यक्षरसंज्ञकचतुर्वर्णपरामर्शकत्वेन वृत्तिकृद्व्याख्यानात्तद्भेदानामुपादानाच्चतुर्दशत्वे द्वादशत्वेऽपरभेदपरित्यागे मानाभावात् । तस्मात्पञ्च समाना नव स्वराः अष्टौ नामिनः तत्तद्भेदाश्च तत्तत्संज्ञकाः । उक्तानुवादपूर्वकमुत्तरग्रन्थं संबध्नाति । अनुक्रान्ता इत्यादि । ग्राहयितुमिच्छा जिग्राहयिषा प्रत्याहाराणां जिग्राहयिषा तया ।

---

टिप्पणी-( १ ) अत्र हि " सन्ध्यक्षराणां च ह्रस्वप्रयोगाभावात् " इत्ययं विषयोऽपेक्षितः प्रतिभाति । गो० प० ।

हयवरल ॥ भणनङम ॥ झढधघभ ॥ जडदगब ॥ खफछठथ ॥ चटतकप ॥ शषस ॥ ॥ आद्यन्ताभ्याम् ॥ प्रत्याहारं जिघृक्षता आद्यन्ताभ्यामेते वर्णा ग्राह्याः । आदिवर्णोऽन्त्येन सह गृह्यमाणस्तन्नामा प्रत्याहारः। तथा हि । अकारो बकारेण सह गृह्यमाणोऽबप्रत्याहारः । स च अइउऋऌएऐओऔहयवरलभणनङमझढधघभजडदगब इत्येतावत्सङ्ख्याकः सम्पद्यते। चटतकप इति चपप्रत्याहार ॥ जडदगब इति जबप्रत्याहारः ॥ झढधघभ इति झभप्रत्याहारः ॥ भणनङम इति भमप्रत्याइारः । एवं यत्र यत्र येन येन प्रत्याहारेण कृत्यं स तत्र तत्र ग्राह्यः । सङ्ख्यानियमस्तु नास्ति ।

आद्यन्ताभ्यामिति । प्रत्याहारा इति अधिकारसूत्रं पूर्वतोऽनुवर्तते । ततश्चाद्यन्ताभ्यां वर्णाभ्यां गृह्यमाणाः प्रत्याहारसंज्ञका भवन्ति संज्ञाविधानसामर्थ्यात्ते मध्यगानामाद्यन्तवर्णानां च ग्राहका भवन्तीत्यर्थः । तावाद्यन्तभागौ तन्नामा । वस्तुतस्तु आद्यन्तेति साङ्केतिकं पृथक् । ततश्चाभ्यामाद्यन्तवर्णाभ्यां गृह्यमाणा आद्यन्तवर्णसंज्ञका इत्यर्थः । आद्यन्तवर्णौ नाम यस्य स तथा ।

सङ्ख्यानियमस्त्विति । एतावन्त एवेति सङ्ख्यायाः नियमः । प्रतिकार्यमाहरणात्कार्याणां चानन्तत्वान्नियमाभाव इत्यर्थः । केचित्तु यत्र यत्र येन येनेत्युक्त्याऽनियमप्रसङ्गमाहुः । सङ्ख्येति । अनियमः आनन्त्यं नास्ति विंशतित्वेन नियमात् । तदुक्तम् । “ भवतल एकैकस्माद्द्वाभ्यां मः स्यात्पबौ चतुर्भ्यस्तः ॥ सः षड्भ्यः

स्यादित्थं प्रत्याहाराश्च विंशतिर्ज्ञेयाः " इति । तथा हि । झभ्, अव्, छत्, इल्, यम्, ञम्, झप्, चप्, खप् यप्, अब्, हव्, झव्, जव्, ( १ ) झस्, हस्, वस्, रस्, खस्, शम्, । ननु भोस्प्रभृतिप्रत्याहाराणामनेकेषां कथयिष्यमाणत्वात्कथं विंशतित्वम् । न च वर्णसमाम्नायसूत्रस्थवर्णैर्विंशतित्वमिति वाच्यम् । औ निपात इत्यादावेकस्वरत्वप्राप्तये औ इत्यस्य वर्णसमाम्नायसूत्रस्थैरेव वर्णैः प्रत्याहारस्य ग्रहीष्यमाणत्वादिति चेत्सत्यम् । वर्णसमाम्नायसूत्रस्थहसैर्विंशतित्वनियमात् । अन्यथा रप्रत्याहाराधिक्ये एकचत्वारिंशन्नियमोऽपि न स्यात् ।

**हसा व्यञ्जनानि ॥ हकारादयः सकारान्ता वर्णा हसा व्यञ्जनानि भवन्ति । स्वरहीनं व्यञ्जनम् ॥ तेष्वकारः मुखसुखोच्चारणार्थत्वादित्संज्ञको भवति ॥**

**हसा** इति । हसप्रत्याहारसंज्ञान्वर्णाननूद्य व्यञ्जनसंज्ञा विधीयते तदेव विवृणोति । हकारादय इति । हसप्रत्याहारद्वारेणैव व्यञ्जनव्यवहारे सिद्धे व्यञ्जनसंज्ञाभिधानं पूर्वप्रसिद्धसंज्ञासंग्रहार्थं विगतं अञ्जनं स्वररूपं यस्मात्तत् व्यञ्जनम् । तदेवाह । **स्वरहीनमिति** । स्वरेभ्यो हीनमन्यत् रहितमिति व्याख्याने तु आत्माश्रयापत्त्या स्वरेषु स्वराभावात्तेषामपि व्यञ्जनत्वमापद्येत । भावप्रधाननिर्देशात्स्वरत्वहीनामिति वार्थः । ननु हसा व्यञ्जनानीत्युक्तत्वाद्धसान्तर्वर्तिनोऽप्यकारस्य व्यञ्जनत्वं स्यादत आह । **तेष्विति** । अश्लिष्टोच्चारणस्य कर्तुमशक्यत्वात्सरित्तरणार्थोपात्ततरोरिव तन्निवृत्तौ पुनः स नोपादेय इत्यर्थः । एति गच्छतीति इत् गत्वर इत्यर्थः ।

---

टिप्पणी ( १ ) एकस्मिन्पुस्तकेऽत्र स्थाने ' मस् ' इत्याकारकः पाठो दृश्यते । स चैकविंशो भवतीति न मूले प्रवेशितः, किंत्विहैव पृथक्त्वेन दर्शितः । गो०प०।

**कार्यायेत् ॥ प्रत्यायाद्यतिरिक्तः कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञको भवति । यस्येत्संज्ञा तस्य लोपः ॥**

इत्संज्ञासूत्रमाह । कार्यायेति । तादर्थ्ये चतुर्थी । कार्यार्थं च प्रत्ययादिष्वेवेति प्रत्ययाद्यतिरिक्त इत्युक्तम् । प्रत्ययादय इति तद्गुणसंविज्ञानात् बहुव्रीहेः प्रत्ययागमादेशधातुसूत्रगणोणादिवार्तिकलिङ्गानुशासनादीनि गृह्यन्ते । एभ्योऽतिरिक्तो भिन्नस्तत्र वर्तमानोऽप्यतत्कार्यकारी कार्यायेतरव्यावृत्तिस्थानानियमनुमागमाद्यर्थादिरूपायेत्यर्थः । अथवा । प्रत्ययः प्रतीतिः प्रयोज्यवृद्धबोधस्तस्यादिः प्रयोजकवृद्धप्रयोगस्तद्रहितः व्यवहारावस्थायामवर्तमान इत्यर्थः । इत्संज्ञकस्य लोप इत्येव वक्तव्ये यस्य तस्येति ग्रहणं सर्वस्येत्संज्ञकस्य लोपार्थं अन्यथा ञिटुडुप्रभृतीनामित्संज्ञकानां लोपलक्षण आदेशे क्रियमाणे षष्ठीनिर्दिष्टस्येत्यन्त्यस्यैव स्यात् । यस्यतस्येत्युक्तौ च शब्दाधिक्यादर्थाधिक्यमिति न्यायात्सर्वादेशसिद्धिः नानर्थकेऽऽलोन्त्यविधिरित्यस्याः परिभाषायाः प्रयोजनाभावाद्भाष्येऽनुक्तत्वादनाश्रयणात् ॥

**वर्णादर्शनं लोपः॥ वर्णविरोधो लोपश्च । मित्रवदागमः । शत्रुवदादेशः ।**

लोपस्वरूपमाह । वर्णेति । वर्णानां श्रवणत्वेन स्वत एवादर्शनान्तविधेर्दर्शिः श्रवणार्थः । वर्णाश्रवणमित्यर्थः । एकं वर्णं विना द्यापरोत्पत्तिप्रतिबन्धाद्वर्णाभ्यां विरुध्यते वर्णो विरुणद्धि इति वा वर्णविरोधः ॥

**स्वरानन्तारिता हसाः संयोगः ॥कुचुटुतुपुवर्गाः । उकारः पञ्चवर्णपरिग्रहणार्थः ।**

स्वरानन्तरिता इति । स्वरैरकारादिभिरनन्तरिता अव्यवहिताः

हसौ च हसाश्च हसा इत्येकशेषाद्द्वयोरपि स्वराऽव्यवहितयोः संज्ञा। संयोग इत्येकवचनेन वृक्षवनमितिवत्समुदायसंज्ञा। कुचुटुतुपु इति। वर्ज्यन्ते सुखग्रहणार्थं विजातीया एषु प्रसारवर्जनाद्वा वर्गाः सजातीयवर्णसमूहास्तद्ग्राहकाइत्यर्थः। संज्ञान्वर्थक्यादुकारानुबन्धित्वाच्च पञ्चवर्णग्राहित्वम्। तथोक्तम्। " अकरात्पञ्चमो वर्णस्तमाहुः पञ्चकग्रहे ॥ उकारस्तत्र विख्यातो नान्यो भवितुमर्हति " ॥ इति

## अरेदो नामिनो गुणः ॥ नामिनः स्थानिकाः अर ए ओ एते गुणसंज्ञका भवन्ति।

अरेदो नामिन इति स्थानषष्ठी ॥ अनियतसम्बन्धायास्तस्यास्तत्त्वात्। एते चानिर्दिष्टस्थाना गुणत्वेन विधीयमाना नामिन एव स्थाने भवन्तीत्यर्थः। विपरीतनिर्देशो नामिष्वकारावध्यर्थः। तेन अर् अ ऋस्थाने एवेत्यादित्रयं एव नामिनः। लृकारस्य त्वल्। मावर्ण्यात् ततश्च याति गोयतीत्यादौ गुणाप्रसङ्गः। विवर्तमनयोर्मध्यपाठान्नामिनो नानुवृत्तिः ॥

## आरैऔ वृद्धिः ॥ आ आर् ऐ औ एते वृद्धिसंज्ञका भवन्ति।

आरैऔ इति। आ इति द्विमात्रग्रहणसामर्थ्यान्न ह्रस्वस्य वृद्धिसंज्ञा आकारस्य आकारो वृद्धिः शेषं पूर्ववत् ॥

## अन्त्यस्वरादिष्टिः ॥ अन्त्यो यः स्वरस्तदादिर्वर्णः स टिसंज्ञको भवति।

अन्त्यस्वरादिष्टिः। अन्त्यस्वर आदिः आदिभूतोऽवयवो यस्य स इति तद्गुणसंविज्ञानेन तत्सहितो वर्णष्टिसंज्ञः। अन्त्यस्वरमात्र एव आद्यन्तवदेकस्मिन्निति स एवादिरन्तश्च अन्त्यादिरिति। " सामीप्ये च व्यवस्थायां प्रकारेऽवयवेऽपि च ॥ आदिशब्दं तु मेधावी चतुर्ष्वर्थेषु लक्षयेत् " ॥

**अन्त्यात्पूर्व उपधा॥ अन्त्याद्वर्णमात्रात्पूर्वो यो वर्णः स उपधा संज्ञको भवति ॥**

अन्त्यादिति सामान्यनिर्देशाद्वर्णमात्रादित्युक्तम् ॥

**असंयोगादिपरो ह्रस्वो लघुः॥ ॥ विसर्गानुस्वारसंयोगादिपरो दीर्घश्च गुरुः॥**

असंयोगादीति । न संयोगादिः संयोगविसर्गानुस्वाराः परे यस्य स तथा विसर्गादिपरस्य ह्रस्वस्यापि गुरुत्वम् । तदुक्तम् । "संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम् । विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन " इति ॥

**मुखनासिकावचनोऽनुनासिकः ॥**

**मुखनासिकाभ्यामुच्चार्यमाणो वर्णोऽनुनासिकः॥ द्विबिन्दुर्विसर्गः ॥ शिरोबिन्दुरनुस्वारः॥ अकुहविसर्जनीयानां कण्ठः ॥ इचुयशानां तालु ॥ ऋटुरषाणां मूर्द्धा ॥ लृतुलसानां दन्ताः ॥ उपूपध्मानीयानामोष्ठौ॥ ञमङणनानां नासिका च ॥ ≍क इति जिह्वामूलीयः ॥ ≍प इत्युपध्मानीयः ॥ अं इत्यनुस्वारः । अः इति विसर्गः ॥**

**॥ इति संज्ञाप्रक्रिया ॥**

मुखनासिकाभ्यामिति । नासिकामनुगतोऽनुनासिको वर्णधर्मस्तदभेदोपचाराद्वर्णोऽपि । यद्यपि द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामित्येकवद्भावविधेर्मुखनासिभ्यामित्ययुक्तं तथाप्यत्र नासिकाशब्देन लक्षणयोच्चारणस्थानयोर्नासाविवरयोरभिधानात् मुखेन युक्ता नासिकेति तत्पुरुषाश्रयणात्साधुत्वम् । यद्वा लक्षणहेत्वोरिति सूत्रे मुखनासिकाभ्यामिति भाष्ये च प्रयोगाज्ज्ञापकादेकवद्भावानित्य-

त्वम् । अत एव " ग्रीवाकुक्षिललाटेषु नित्यं स्वेदः प्रशस्यते " । " पातितै रथनागाश्वैः " इत्यादि प्रयोगाः । रक्षिते तु दधिपयआदेराकृतिगणत्वादेकवद्भावाभाव उक्तः ॥

॥ इति सन्ध्युपयोगिनी संज्ञाप्रक्रिया ॥

**अधुना स्वरसंधिरभिधीयते ॥ इ यं स्वरे ॥ इवर्णो यत्वमापद्यते स्वरे परे । दधि आनय इति स्थिते । दध्य् आनय इति तावद्भवति ।**

उपोद्घातसङ्गत्या संज्ञां निरूप्य सन्धिसूत्रोपजीवकत्वाच्छब्दनिरूपणात्प्राक् सन्धिनिरूपणं प्रतिजानीते । अधुनेति । सन्धित्वं च पूर्वोत्तरान्योन्यमिलितत्वं कार्यत्वम् । स्वराणां प्रथमोद्दिष्टत्वेन स्वरसन्धिमभिधास्यन् अवर्णस्य च तत्त्वेन सन्ध्यभावात्सवर्णदीर्घः सहेत्यादेश्च परत्वेन बलवत्त्वार्थेन तत्परित्यागेन इवर्णादिक्रमेण सन्धिमाह । इ यमिति साङ्केतिकं प्रथमैकवचनान्तम् । तदुक्तम् । " सूत्रे विभक्तिर्नैवास्ति वृत्तौ सा यत्र दृश्यते ॥ एकद्विबहुवाक्येषु तत्साङ्केतिकमुच्यते " इति ॥ वस्तुतस्तु अनुभूतार्थयोगित्वं साङ्केतिकत्वम् । यत्वमिति भावनिर्देशः सस्वरयकारादेशः सन्देहाभावार्थः । वर्णग्रहणेन सवर्णग्रहणाद्दीर्घेकारस्यापि ग्रहणम् ॥

**हसेऽर्हसः ॥ स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भवति । धकारस्य द्वित्वम् । पुनर्द्वित्वे प्राप्ते । न द्विरुक्तस्य द्विरुक्तिः । द्वित्वविधानसामर्थ्यात् द्वावेव शिष्येते अन्ये हसा लुप्यन्ते ।**

हसे इति । अर्हसः र् च ह् च र्हौ ताभ्यामन्योऽर्हः । रेफहकारवर्जित इति । रेफहकाराभ्यामन्यः रेफत्वहकारत्ववर्जित इति वा । स्वरादितीङ्ङ्णो ह्रस्वाद्द्विः स्वरे इति पूर्वसूत्राद्ध्रस्वादित्यनुवृत्तेस्तस्यच स्वरभेदत्वात् । अत एव दात्रम्, पात्रमित्यादौ दीर्घात्प-

रस्य न द्वित्वम् । जातिपदार्थाङ्गीकारात्स्वरे इत्यस्यानुवृत्तेर्वा पुनर्द्वित्वाप्रसङ्गः ॥

झभे जबाः ॥ झसानां झभे परे जबा भवन्ति । इति पूर्वधकारस्य दकारः । सवर्णत्वाद्वर्ग्यौ वर्ग्येण सवर्ण इति वचनात् । यथासङ्ख्यं वा वक्तव्यम् । स्वरहीनं परेण संयोज्यम् । दध्यानय इति सिद्धम् । गौरी अत्र । अत्र अर्ह इति विशेषणान्न रेफस्य द्वित्वम् किन्तु ॥ राद्यपो द्विः॥ स्वरपूर्वाद्रेफात्परो यपो द्विर्भवति । जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम् । गौर्य्यत्र । स्वर इत्यनुवर्तते एवमन्यत्रापि । यत्र न सूत्राक्षरैः कार्यसिद्धिस्तत्र सर्वत्र सूत्रान्तरात्पदानुवृत्तिर्ज्ञातव्या । ग्रन्थभूयस्त्वभयान्नास्माभिर्लिख्यते ।

झभ इति । केचित् झसे इति पठन्ति । तन्मन्दम् । झभे परत एव जबदर्शनादाधिकसंग्रहासङ्गतेः । भृज्जो भृज्ज इत्यादावन्यत्र सौ ज इति सिद्धेः । गोमहिषीन्यायेन सवर्णस्य सवर्ण एव भवतीति भावः । यद्यपि झसानां बहुत्वाज्जबानां चाल्पत्वादत्र यथासङ्ख्यत्वासम्भवस्तथापि पञ्चपञ्चवर्णसमुदायापेक्षया यथासङ्ख्यत्वं, प्रसङ्गादत्रोक्तेर्वा । अत एवाग्निमदित्यादौ यथासङ्ख्यत्वेनादेशाभावः । वक्तव्यस्य प्रयोगानुसारित्वाद्वा । तदुक्तम् । “ सारस्वततत्त्वे तुल्येऽपि सूत्रवक्तव्ययोर्भिदः । प्रवृत्तिर्लक्षणात्सूत्रे व्यक्तये तु प्रयोगतः ” इति ॥ अन्तरङ्गे संयोगान्तलोपे कर्तव्ये बाहिरङ्गस्यादेशस्यासिद्धत्वात्तद्भावः स्यात् । अर्ह इत्यत्र सांश्लिष्टत्वाद्धकारस्याप्युपलक्षणत्वान्नह्यस्तीत्यादौ हात्परस्यापि यपो द्वित्वम् । य-

१ ‘ सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र ’ इत्येतदनुवादकमिदम्.

द्यपि माठरकौण्डिन्यन्यायेन साक्षाच्छ्रुतेन रेफस्य द्वित्वनिमित्तत्वेन द्वित्वकार्यित्वबाध एवेति विशेषणवैयर्थ्यं तथाप्यस्यैव प्रपञ्चार्थमेतदित्यवसेयम् । ङ्णनो ह्रस्वादित्यतो द्विरित्यनुवर्तमानेऽपि द्विरिति पूर्वस्यानित्यत्वज्ञापनार्थम् । पाषाणपिण्डिकान्यायेन त्वधोगमनं कुतो न स्यात् । " अग्रे रेफस्त्वधो याति पश्चाद्रेफस्य चोर्ध्वता । तुम्बिका शुष्ककाष्ठं च तैलं जलसमागमे ॥ यथोर्ध्वस्थानमायाति रेफस्यापीदृशी गतिः । स्वरं दृष्ट्वा त्वधो याति हसस्योपरि गच्छति । अवसाने विसर्गः स्यात्त्रिधा रेफस्य लक्षणम् " ॥ इति प्रमाणात् । यत्तु गौर्य्यत्रेत्यत्र द्वित्वं दीर्घादाचार्याणामित्यनेन विरुद्धमिति । तदसत् । दीर्घादाचार्याणामित्यनेन दात्रमित्यादौ दीर्घादचः परस्य यपो द्वित्वनिषेधात् व्याख्यानान्तरस्य च भ्रान्तिविजृम्भितत्वात् । नास्माभिरिति । अस्मात्सूत्रादेतत्पदमनुवर्तत इति अस्माभिर्न लिख्यत इत्यर्थः । यद्वा[२] आभिः सरस्वतीभिः तत्सूत्रे तत्तत्पदं न आलिख्यते स्मेति व्यवहितान्वयः ॥

**उ वम् ॥** उवर्णो वत्वमापद्यते स्वरे परे । मधु अत्र मध्वत्र[३] ॥ **ऋ रम् ॥** ऋवर्णो रत्वमापद्यते स्वरे परे । पितृ अर्थः-पित्रर्थः ॥ **ऌ लम् ॥** ऌवर्णो लत्वमापद्यते स्वरे परे । ऌ अनुबन्धः-लनुबन्धः ॥

ऌ अनुबन्धो यस्य स लनुबन्धः । गम्ऌ गतावित्यादिः ॥

**ए अय् ॥** एकारो अय् भवति स्वरे परे । ने अनम् नयनम् ॥ **ओ अव् ॥** ओकारो अव्

---

१ 'माढर' इत्यपि । २ इदमर्थकरणं केवलं टीकाकर्तबुद्धिसौक्ष्म्यप्रदर्शनार्थम् न, वस्तुतः, क्लिष्टार्थप्रतिपादनेन ग्रन्थकारशैलीति ग्रन्थकृल्लक्षणात् । ३ अत्रापि 'दध्यपान्ये' तिवद्द्वित्वादि ।

भवति स्वरे परे। लो अनम् लवनम्। अति-भवति॥

गवादेरवर्णागमोऽक्षादौ वक्तव्यः । * ।

गो अक्षः गवाक्षः। गो इन्द्रः—गवेन्द्रः । गो अजिनम् गवाजिनम् । प्र ऊढः—प्रौढः । स्व ईरिणी—स्वैरिणी । अक्ष ऊहिनी—अक्षौहिणी सेना ॥

गवादेरिति । यद्यपि कित्त्वाद्यागमनियामकस्याभावादव्यवस्था स्यात्तथापि गवादेरिति पञ्चमीनिर्देशात् गवादेः परः अवर्णस्य आगमः आगमनं भवति । केचित्तु गवादेः अप्रत्ययो भवति क्वचिद्वर्णस्य परभूतस्य आगमोऽर्थात्पूर्ववर्णं प्रतीत्यर्थः । तेन गोऽजिनमित्यादिसिद्धिरिति व्याख्येरन् । अन्ये तु गो अग्रमित्यादौ क्वचिद्वर्णस्य आगमः अलोप इत्याहुः । वस्तुतस्तु वक्तव्यत्वाद्वाशब्दाद्वा गवाक्षः गवेन्द्र इत्यत्र नित्यम् । गवेशः गवीश इत्यत्र वा । गोऽग्रं गोऽजिनमित्यत्र न किन्तु एदोतोऽत इत्यवर्णलोपः । गोऽग्रं गोअजिनमिति प्रकृतिभावोऽपि । प्रौढ इत्यत्रावर्णागमस्य बहिरङ्गेणापि प्रथमं सन्धिविधानसामर्थ्यान्नित्यत्वाच्च । प्रौढः प्रौढिः। प्रारौहः । स्वैरम् । स्वैरिणि । अक्षौहिणीत्यादयः प्रयोगतो ज्ञेयाः ॥

क्वचित्स्वरवद्यकारः । * । यथाध्वपरिमाणे । गव्यूतिः। अन्यत्र गवां मिश्रीभावे गोयूतिः ॥ ऐ आय् ॥ ऐकारो आय् भवति स्वरे परे । नै अकः—नायकः॥ औ आव् ॥ औकारो आव् भवति स्वरे परे । तौ इह—ताविह ॥ य्वोर्लोपश्वा पदान्ते॥ पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपश्च वा भवति स्वरे परे । तौ।

इह-ताविह-ता इह । ते आगताः-तयागताः-त आगताः । पटो इह-पटविह-पट इह । लोपशि पुनर्न सन्धिः । छन्दसि तु भवति । हे सखे इति-हे सखयिति-हे सखेति ॥

प्रसङ्गादाह । क्वचिदिति । गव्यूतिः स्यात्क्रोशयुगमित्यभिधानात् । क्वचिदित्युक्तेर्गवां मिश्रीभावे गोयूतिरित्येव । अत एव शक्यार्थे क्षय्यः जय्यः अन्यत्र क्षेयं जेयं मनः तथा क्रयार्थे प्रसारितः क्रय्यः क्रेयोऽन्यः एवं गव्यनाव्यादयः प्रयोगतो ज्ञेयाः । नन्वनेनैव लव्यादिसिद्धावोदौतोर्यः स्वरवदित्यनारम्भणीयमिति चेत्सत्यम् । सिद्धे सत्यारभ्यमाणो विधिर्नियमायेति यादिनिमित्तयोरेवोदौतोरिति नियमार्थत्वात् । अत एव आ उयते ओयते इत्यादौ तदभावः । य्वोः पूर्वसूत्रेभ्योऽयादीननुवर्त्य व्याचष्टे अयादीनामिति । ततश्चैतद्भावितानामित्यर्थात् वृक्षं वृश्चतीति वृक्षवृट् तमाचष्टे इत्यर्थे णिचि टिलोपे वृक्षयाति ततः क्विपि णिलोपे वृक्षवू इहेत्यादौ लोपाभावः लोपशीति न पूर्वकार्यमित्यर्थः । दण्डिष्वित्यादावुत्तरकार्यं भवत्येव । यद्यपि राजभिरित्यत्रोत्तरकार्यं तथापि तस्मिन्सति पूर्वकार्यस्य भावित्वात्तदभावः । वक्तव्यत्वात्पुनरित्यधिकोपादानस्याधिकार्यत्वाद्वा राजाश्व इत्यादौ सन्धिः । यत्तु सन्धिग्रहणात्सन्धिसूत्रेणैव लोपशि सन्धिप्रतिषेधाद्राजाश्व इत्यादौ तदभावात्सन्धिर्भवत्येवेति । तदसत् । राजभिरित्यादौ तत्प्रसङ्गात् । वस्तुतस्तु पुनःपदोपादानाद्यन्निमित्तकः सन्धिर्वृत्तस्तन्निमित्तकः पुनः सन्धिर्नेत्यर्थः ॥

एदोतोऽतः ॥ पदान्ते स्थितादेकारादोकाराच्च परस्याकारस्य लोपो भवति । ते अत्र तेऽत्र । पटो अत्र पटोऽत्र ।

**एदोतोऽत** इति । तपरकरणं सुखोच्चारणार्थं अत इत्यत्र तु तावन्मात्रार्थम् । वक्ष्यमाणसामान्यविशेषन्यायेनास्य विशेषत्वात्परत्वान्निरवकाशत्वाच्च नायवौ ॥

**सवर्णे दीर्घः सह ॥ सवर्णस्य सवर्णे परे सह दीर्घो भवति । श्रद्धा अत्र–श्रद्धात्र । दधि इह–दधीह । भानु उदयः–भानूदयः । " अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता । पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते ॥ सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेत् । परेण पूर्वबाधो वा प्रायशो दृश्यतामिह " ॥**

**सवर्णे** इति । सवर्णस्यैव सवर्णपरत्वमिति सवर्णस्येत्युक्तम् । सहेति पूर्वपरयोरेकादेशसम्पादनार्थम् । दधीहेत्यादौ यत्वस्यापि प्राप्तावाह । **सामान्येति** । बहुव्यापकं सामान्यमल्पव्यापको विशेषः शासनात् शास्त्रं सूत्रम् उत्सर्गापवादयोरपवादो बलवानित्यर्थः । व्यक्तिपदार्थाङ्गीकारे प्रत्येकवाक्यपरिसमाप्तेर्विशेषत्वाविशेषात्पक्षान्तरम् । परेण पूर्वबाधो वेति परिहृत्यापवादविषयं तत उत्सर्गः प्रवर्तत इति न्यायेन क्षत्रिसार्द्धनिषेधवत्तत्र वाक्ये कल्पनैव नेति भावः । सौत्रक्रमात्पौर्वापर्यम् । प्रायश इति । परशब्दस्येष्टवाचित्वात्पूर्वेणापि क्वचित्परबाध इति द्योत्यते । ऋत्वोर्लोपश्चेत्यतो मण्डूकप्लुत्या वानुवृत्तेस्तस्य च निपातत्वेनानेकार्थत्वाद्धोतृ ऋकार इत्यादौ ऋकारस्य ऋकारे ऋकारो वा, पक्षे प्रकृतिभावोऽपि, वापक्षे दीर्घश्चेति रूपत्रयम् । होतृ ऌकार इत्यादौ ऋकारऌकारयोर्वा । ऌपक्षे ऋऌवर्णयोः सवर्णत्वात् दीर्घऌकाराभावाद्दिमते दीर्घ ॠ इत्यादि ॥

---

( १ ) सामान्यकार्यापेक्षया विशेषकार्यस्य बलीयस्त्वमिति सामान्यविशेषन्यायः । एतदेव मूले प्रतिपादयिष्यते " सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेत् " इति ।

**अ इ ए ॥** अवर्ण इवर्णे परे सह ए भवति । तव इदम् तवेदम् । मम इदम् ममेदम् ॥ **हलादेरीषादौ टेर्लोपो वक्तव्य।**❀। हल ईषा-हलीषा। लाङ्गल ईषा—लाङ्गलीषा । मनस् ईषा—मनीषा ।

हलादेरिति । वक्तव्यत्वात्क्वचिद्विकल्पेन क्वचिच्च नित्यमिति ततश्चावर्णान्तोपसर्गस्यैङादौ धातौ टिलोपात्प्रेजते प्रोषतीत्यादि । एङादौ सुब्धातौ वेति । उपेडकीयति—उपेडकीयति प्रोघीयति प्रौघीयतीत्यादि । शकन्धुः । कर्कन्धुः । कुलटा । सीमन्तश्च केशवेश एव । अन्यत्र सीमान्तः । पतञ्जलिः सारङ्ग इत्यादौ नित्यमेव । अद्येवेत्यादावनवधारणार्थे एव । अवधारणे तु अद्यैव गच्छत्वथ॥

**ओमि च ॥** ओमि परे नित्यं टेर्लोपो भवति । अद्य ओम् अद्योम् ॥ **उ ओ ॥** अवर्ण उवर्णे परे सह ओ भवति । गङ्गा उदकम् गङ्गोदकम् **ऋ अर् ॥** अवर्ण ऋवर्णे परे सह अर् भवति । तव ऋद्धिः तवर्द्धिः ॥

ओमिति । शिवायों नमः । शिव आ इहीत्यत्र धातूपसर्गयोः कार्यमन्तरङ्गमित्यन्तरङ्गत्वादादावेकारे कृते 'यो[2] ह्युभयोः स्थाने भवति लभतेऽसावन्यतरव्यपदेशम्' इत्याङ्नाङेकादेशस्यान्तवद्भावादाङ्यवर्णान्तस्य टिलोपाच्छिवेहीत्यादि तथापठत् इतीत्यादावद्विरुक्तस्यानेकस्वरस्याव्यक्तानुकरणस्यादन्तस्य इतौ टिलोपात्पटितीत्यादि । द्विरुक्तस्य त्वस्य पृषोदरादिवद्विकल्पेन वर्णनाशात्पटत्पटेति—पटत्पटदितीत्यादि एवमन्यत्रापि प्रयोगतो ज्ञेयम्।

---

१ 'अ इ ए' इत्यतः 'अ' इत्यनुवर्तते । २ 'अन्तादिवच्च' इत्येतत्सूत्रार्थकथनमिदम्।

क्वचिदार् ॥ अवर्ण ऋवर्णे परे सह क्वचिदार् भवति। ऋण ऋणम् ऋणार्णम्। शीतेन ऋतः—शीतार्तः ॥ ऌ अल् ॥ अवर्ण ऌवर्णे परे सह अल् भवति। तव ऌकारः—तवल्कारः॥ऋऌवर्णयोर्मिथः सावर्ण्यं वा वक्तव्यम्। ❋। होतृ ऌकारः—होतॄकारः—होत्लकारः ॥

क्वचिदिति। सुखार्त इत्यादौ तृतीयासमासे वाच्ये ऋते परे तथा प्रार्णमित्यादौ प्र वत्सतर कम्बल वसन ऋण दशन् एषामृणे परे एवमुपार्च्छति प्रार्च्छतीत्यादौ ऋकारादौ धातावर्णान्तोपसर्गस्य तस्मिन्सुब्धातौ त्वस्य वेति। उपर्षभीयति—उपार्षभीयति। तथा ऌकारादावपि सावर्ण्याद्वाल्। प्राल्कारीयति—प्रल्कारीयति। इत्यादि ज्ञेयम् ॥

रलयोः सावर्ण्यं वा वक्तव्यम्। ❋ । परि अङ्कः—पर्य्यङ्कः—पल्यङ्कः ।

रलयोरिति। सावर्ण्यविधानं तवल्कार इत्यादौ लात्परस्यापि यपो द्वित्वाद्यर्थम्। नचैवं बलेनेत्यादावपि राश्रितं णत्वमापद्यतेति वाच्यम्। वक्तव्यत्वेन सन्धिकार्य एवानयोः सावर्ण्यविधानात् ॥

ए ऐ ऐ ॥ अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति। तव एषा—तवैषा। तव ऐश्वर्यम् तवैश्वर्यम्॥ ओ औ औ ॥ अवर्ण ओकारे औकारे च परे सह औकारो भवति। तव ओदनम् तवौदनम्। तव औन्नत्यम् तवौन्नत्यम्॥ ओष्ठोत्वोर्वौ समासे ॥ अवर्ण ओष्ठोत्वोः

परयोर्वा सह ओ भवति समासे सति । बिम्ब ओष्ठः-बिम्बौष्ठः-बिम्बोष्ठः । स्थूल-ओतुः-स्थूलौतुः स्थूलोतुः ॥ इति स्वरसन्धिः ॥

ओष्ठोत्वोरिति । वा ओ इति छेदः । यद्यपि द्वन्द्वे घीति ओतः पूर्वनिपातप्राप्तिस्तथापीन्द्राग्नीवत् द्व्यन्तादजाद्यदन्तयोर्द्व्यन्तं परमिति परत्वम् । वाशब्दात्समासे एव नेह । तवौष्ठः । इति सारस्वतप्रसादे स्वरसन्धिः ॥

## अथ प्रकृतिभाव उच्यते ॥ नामी ॥

अदसोऽमीशब्दः सन्धिं न प्राप्नोति । अमी आदित्याः । अमी उष्ट्राः । अमी एडकाः ॥ य्वे द्वित्वे ॥ ई च ऊ च ए च य्वे ईकारान्त ऊकारान्त एकारान्तश्च शब्दो द्वित्वे वर्तमानः सन्धिं न प्राप्नोति ॥ मणीवादिवर्जम् ॥ अग्नी अत्र । पटू अत्र । माले आनय । मणीवादीति किम् । मणी इव-मणीव । रोदसी इव-रोदसीव । दम्पती इव दम्पतीव ॥

अथेति । प्रकृत्या यथावस्थितस्वरूपेण भवनं प्रकृतिभाव इत्यर्थः । नामीति य्वोर्लोपश्चेत्यतो वानुवृत्तेस्तस्य च व्यवस्थितार्थत्वकल्पनेन लोकाच्चादस एवामीशब्दस्य प्रकृतिभावात् " अम्यागाति भिषग्गृहे " इत्यादावमो रोगः सोऽस्यास्तीत्यमीत्यस्य प्रकृतिभावाभावः । वस्तुतस्तु अमी ई इति छेदः एवं च ईकारान्तोऽमीत्यर्थः । स चादस एव संभवति रोगिवाचकस्येन्नन्तत्वात् । नेति योगविभागाद्विष्णो इति विष्णविति इत्यादौ सन्बुद्धावाकारान्तस्यावैदिके इतौ परे वा प्रकृतिभावः । तथेगन्तस्यासमासेऽसवर्णे

स्वरे वा प्रकृतिभावः । वाशब्दादेव च ह्रस्वत्वमपि वेति । चक्री अत्र, चक्रि अत्र, चक्र्यत्रेत्यादि । तथाऽगन्तस्य ऋति परे प्रकृतिभावह्रस्वत्वतदभावा इति । ब्रह्म ऋषिः ब्रह्मर्षिरित्यादयो ज्ञेयाः । नामीति कृतसन्धिनिर्देशात्पूर्वं सन्ध्यनिषेधः । ग्वे द्वित्वे इति सामान्योक्तेः । पचेते अत्रेत्यादावपि प्रकृतिभावत्वम् । ग्वे इत्यस्य प्रकृतिशब्दविशेषणत्वात् येन विधिस्तदन्तस्येति तदन्तत्वोक्तिः ।

**औ निपात ॥ आकार ओकारो निपात एकस्वरश्च सन्धिं न प्राप्नोति । आ एवं मन्यसे । नो अत्र स्थातव्यम् । उ उत्तिष्ठ । अ अपेहि । इ इन्द्रं पश्य ।**

औ निपात इति । औ आ ओ औ इति छेदाच्चतुष्पदं द्विपदं वा । अवर्णस्य ओकारेण सहोच्चारितस्य ओ इति प्रत्याहारादेकस्वरावाप्तिः । औकारे आवादेशे वकारलोपाशि च सूत्रस्य छान्दसत्वाश्रयणात्सन्धिः । द्विपदत्वपक्षे केचिदेकशेषमाहुस्तन्मन्दम् । विभक्तिपरत्वाभावात् । निपात इति प्रत्येकं सम्बध्यते । आ इति निरनुबन्धकग्रहणात् " निरनुबन्धकग्रहणे न सानुबन्धकस्य " इति आङो न निषेधः एतद्विभागश्चोक्तः ।" ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् " उदाहृतं च " ओत्तमैरेक्ष्यसे न त्वमामृतादेन्द्रतोऽखिलैः । आ एवं सर्ववेदार्थ आ एवं सद्वचो हरेः " इति ॥ एकस्वरत्वादेव सन्ध्यप्राप्तावपि पुनरुपादानसामर्थ्यादोकारस्यौकारान्तनिपातोपलक्षणत्वम् । अत्रापि वानुवृत्तेः । उञः इतौ वेति उ इति विति । तस्मादेव चोञ इतौ दीर्घसानुनासिक उवर्णादेशश्च वेति ऊँ इति । तथा मयः परस्योञोऽचि वो वेति । किमु उक्तं किम्वुक्तमित्याद्यूह्यम् ।

**प्लुतः ॥ प्लुतश्च सन्धिं न प्राप्नोति । देवदत्त ३**

एहि ॥ दूरादाह्वाने च टेः प्लुतः ॥ दूरादाह्वाने गाने रोदने विचारे च गम्यमाने टेः प्लुतो भवति ॥ देवदत्त ३ अत्र गौश्चरति । हैहयोरपि ॥ एतयोः सन्धिर्न भवति । हे इ अनड्वन् । इति प्रकृतिभावः ॥

दूरादिति । यद्यपि दूरत्वमव्यवस्थितं तथापि प्राकृतप्रयत्नाधिक्यप्रयत्नाश्रयणेन यत्र श्रवणं तज्ज्ञेयम् । आह्वानस्य रोदनाद्युपलक्षणत्वाद्धाने इत्याद्युक्तिः । तत्र गानरोदनयोः प्रसिद्धम् । विचारे अधःस्विदासीदुपरिस्विदासीदित्यादौ । एवं वाक्यस्य टेः प्लुत इत्याद्यूह्यम् । अग्निवीरेत्यादि । इति सारस्वतप्रसादे प्रकृतिभावः ॥

अथ व्यञ्जनकार्यमुच्यते ॥ चपा अबे जबाः ॥ पदान्ते वर्तमानाश्चपा जबा भवन्त्यबे परे । षट् अत्र षडत्र । वाक् यथा–वाग्यथा ।

चपा इति । यद्यपि खसे चपा इति विशेषविधेः प्राक् इत्यादाववसाने च पक्षे चपविधानसामर्थ्यादेव तदप्राप्तौ परिशेषादबपरत्वप्राप्तौ अब्ग्रहणं व्यर्थम् । तथापि चपाच्छः शः इत्युत्तरसूत्रेऽनुवृत्त्यर्थम् । ततश्च वाक्श्चोततीत्यादौ तदभावः । चपानां झपोपलक्षणाद्विपरीतनिर्देशाद्वा समिध इन्धनं यस्येति समिदिन्धनं अग्निमज्ञानमित्यादावपि जबाः ॥

ञमे ञमा वा ॥ पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवन्ति । वाक् मात्रम्–वाङ्मात्रम्–

---

१ 'चपा' अबे जबा इत्यतश्चपा इत्यनुवर्तते ।

वाङ्मात्रम् । षट् मम—षड्मम—षण्मम ।

ञमे इति । वाशब्दस्य व्यवस्थिताव्यवस्थितविकल्पार्थत्वान्मयटि नित्यम् । चिन्मयम् । यत्तु प्रत्ययञमे नित्यविधेर्वाङ्मात्रमित्येकमेव रूपमिति । तदयुक्तम् एवंविधे नियामकाभावात् । मयटि नित्यं वाच्यमित्युक्तेः कलापादिषु प्रत्ययग्रहणं विशेषपरं ज्ञेयम् । चपा अबे जबा इत्यतो झपोपलक्षितचपानुवृत्तेर्मृन्मयं ककुन्मयमग्निमन्नयनमित्यादौ झपानामपि ञमाः ॥

**चपाच्छः शः ॥ चपादुत्तरस्य शकारस्य छो वा भवति अबे परे वाक् शूरः वाक्छूरः हो झभाः ॥ चपादुत्तरस्य हकारस्य झभा वा भवन्ति । यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवति । तत् हविः तद्धविः—तद्हविः । वाक् हरिः वाग्घरिः वाग्हरिः ॥**

चपादिति । विपरीतनिर्देशोऽसन्देहार्थः । अन्यथा कार्यान्तरवृत्त्यर्थं छस्यैव छविधिरिति सन्देहः स्यात् । चपा अबे जबा इत्यस्याप्यनुवृत्तिर्वा ततश्च पूर्वं चपा अबे जबाः । पश्चात् ञमे ञमाः । यद्यपि विभक्तिविपरिणामेन चपानुवृत्तावपि पुनस्तद्ग्रहणमपार्थं तथापि विभक्तिविपरिणामस्यानन्यगतिकत्वेनात्रानाश्रयणं पदान्त इत्येव नेह । विसृपशन्हः इति चपा अबे जबा इत्यतो मण्डूकप्लुतिन्यायेन विभक्तिविपरिणामेन पञ्चम्यन्तजबानुवृत्तेः झपोपलक्षितचपानुवृत्तेर्वा समिद्धोमोऽग्निमद्भुतं ककुब्धृतमित्यादिसिद्धिः । यद्वर्गग इति । अयं भावः । घोषवत्त्वनादवत्त्वमहाप्राणत्वसोष्मत्वादिधर्मैश्चपचतुर्थैर्हस्यान्तरतमत्त्वाज्जुहोतीत्यादौ हस्थाने वर्गचतुर्थोद्देशार्थमिदं प्रसङ्गादत्रोक्तम् । अत्र निमित्तनैमित्तिकयोर्यथासङ्ख्येनाप्युपपत्तेरिति ॥

स्तोः श्चुभिश्चुः ॥ स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासङ्ख्येन भवतः। सकारस्य शकारः तवर्गस्य चवर्गः। कस् चरति-कश्चरति। कस् शूरः-कश्शूरः । तत् चित्रम् तच्चित्रम्। तत् शास्त्रम् तच्छास्त्रम्॥ न शात् ॥ शकारादुत्तरस्य तवर्गस्य श्चुत्वं न भवति। विश् नः विश्नः। प्रश् नः-प्रश्नः॥ ष्टुभिः ष्टुः॥ स्तोः सकारतवर्गयोः षकारटवर्गाभ्यां योगे ष्टुर्भवति।सकारस्य षकारः तवर्गस्य टवर्गः । कस् षष्ठः कष्षष्ठः। कस् टीकते-कष्टीकते। तत् टीकते-तट्टीकते ॥

स्तोरिति। स् च तुश्चेति समाहारद्वन्द्वे छान्दसो लिङ्गव्यत्ययः। "अनित्यमागमानुशासनम्" इति वा नुमभावः। इतरेतरयोगे वा तत एव वचनव्यत्ययः । यद्यप्युकारान्तत्वेन तोः पूर्वनिपातत्वं प्राप्नोति तथापि श्लिष्टोच्चारणेन लाघवात्सस्य सोष्मत्वादिगुणेन प्राधान्यात्पूर्वनिपातनियामकस्य वक्तव्यत्वात्सौत्रत्वाद्वा पूर्वम्। यत्तु सा युतस्तुरिति तत्पुरुषाश्रयणमिति। तदयुक्तम् । तत्पुरुषे परपदप्राधान्यात्सकारयुतस्यैव तवर्गस्य श्चुत्वविधिप्रसङ्गात्। श्चुभिरिति बहुवचनं व्यक्त्यभिप्रायेण जात्यभिप्रायेण वा । यत्तु स्थान्यादेशयोरिव निमित्तनैमित्तिकयोरपि यथासङ्ख्यत्वप्राप्तौ तदभावार्थमिति। तदयुक्तम्। तदभावस्य न शादिति निषेधादेव सिद्धेः। निमित्तनैमित्तिकयोर्यथासङ्ख्यत्वाभावात्सकारस्य शकारचवर्गाभ्यां शः एवं तवर्गस्य शकारचवर्गाभ्यां चवर्ग इत्यर्थः। श्चाविति वक्तव्ये श्चुभिरित्युक्तिरुभयतो योगार्था ततश्च राज्ञो यज्ञ इ-

त्यादावपि श्चुत्वम् तच्चित्रमित्यत्र कुत्वेऽन्तरङ्गे बहिरङ्गश्चुत्वस्यासिद्धेस्तदभावः । न षीति निषेधात् ज्ञापकादत्रापि सकारस्य षकारटवर्गयोगे षकारस्तथा तवर्गस्य टयोगे टवर्ग इत्यर्थः । शेषं पूर्ववत् । "टीकृ गतौ" इत्यस्य टीकते इति रूपम् ॥

तोर्लि लः ॥ तवर्गस्य लकारे परे लकारो भवति । तत् लुनाति–तल्लुनाति । भवान् लिखति भवाँल्लिखति । अन्तःस्था द्विप्रभेदाः ॥ रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिकस्य नकारस्य सानुनासिक एव लकारो भवति ॥ न षि ॥ षकारे तवर्गस्य ष्टुत्वं न भवति । भवान् षष्ठः–भवान्षष्ठः ।

तोरिति । "एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इति पूर्वतः स्तोरनुवृत्तेः तोरित्युक्तम् । लकारस्य द्वैविध्यात्स्थानेऽन्तरतम इति निरनुनासिकस्थाने निरनुनासिकः सानुनासिकस्थाने सानुनासिको लकार इत्यर्थः । न षीति सप्तमीनिर्देशात् लोष्टा येष्टेत्यादौ पूर्वयोगे ष्टुत्वं भवत्येव ॥

टोऽन्त्यात् ॥ पदान्ते वर्तमानाट्टवर्गात्परस्य स्तोः ष्टुर्न भवति । षट् नरः–षण्नरः । षट् सीदन्ति षट्सीदन्ति ॥ नः सक्छते ॥ नान्तस्य पदस्य छते परे सगागमो भवति ॥ टित्कितावाद्यन्तयोर्वक्तव्यौ ॥ टित्त्वादादौ कित्त्वादन्ते । राजन् चित्रम्–राजँश्चित्रम् । भवान् तनोति भवाँस्तनोति ।

**टोरिति** । नर इति नृशब्दस्य प्रथमाबहुवचनान्तस्य " अमे अमा वा " इत्यतो वानुवृत्तेस्तस्य च व्यवस्थितार्थत्वेन षण्णवतिः षण्णगर्य इत्यात्रानिषेधः । **नः सगिति** । नः सगिति योगविभागाद्वानुवृत्तेश्च नॄन् पाहीत्यादौ सकि अपदान्तत्वेन नस्यानुस्वारे विसर्जनीये च कुप्वोः ≍क ≍पौ वेति विकल्पेन नॄ ≍ पाहि—नॄः पाहीत्यादि । तथा कान्कानित्यत्रापि सपि सकि वाशब्दस्य व्यवस्थितार्थत्वेन ष्कस्य भावे औत्सर्गिकसादेः सादेशे कांस्कान् विकल्पात्कान्कान् । प्रशान् तनोतीत्यत्र च न । सन्सः । षट्सन्त इत्यादौ वा शब्दाल्लोकाद्वा नकारटकाराभ्यां सस्य विकल्पेन धुटि चपे च सन्त्सः षट्त्सन्त इत्यादि यथायथमूह्यम् । प्राङ्षष्ठः सुगण्षष्ठ इत्यादौ ङकारणकारयोः शसे परे कुक्टुकोः सतोः कपयोगे क्ष इति क्षादेशे च प्राङ्क्षष्ठः सुगण्ट्षष्ठ इत्याद्यपि ज्ञेयम् । राजंश्चित्रमित्यत्र सस्य श्चुत्वे नस्यापदान्तत्वाच्चगभावः । यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त इति न्यायात्सस्य पदान्तत्वात् अत एव परत्वात् श्चुत्वस्य बहिरङ्गत्ववेनासिद्धत्वाच्चुत्वाभावे नश्चापदान्त इत्यनुस्वारः यस्य विसर्गोऽपि पुनः स एव ॥

**शे चग्वा ॥ नान्तस्य पदस्य शे परे वा चगागमो भवति । भवान् शूरः—भवाञ्छूरः—भवाञ्शूरः**

**शे चगिति** । भवान्शूरः इत्यत्र चकि नस्यापदान्तत्वेनानुस्वारे श्चुत्वे च प्राप्ते परत्वादनुस्वारेऽपि यमा यपेऽस्येत्यपदान्तेऽनुस्वारस्य नित्यं यमाभावात् ञकार एव कुत्वाभावश्च बहिरङ्गत्वेनासिद्धत्वात् । छत्वे कृते संयोगान्तलोपात् भवाञ्छूर इत्येके । ननु कुर्वन् शेते इत्यादौ चकि नस्यापदान्तत्वात्परत्वाण्णत्वं स्यादिति चेत् । सत्यम् । परशब्दस्येष्टवाचित्वेन क्वचित्पूर्वेणापि परबाधादनुस्वारपरसवर्णौ ॥

**ङ्णनो ह्रस्वाद्द्विः स्वरे ॥ ङकारणकारन-**

कारा ह्रस्वादुत्तरा द्विर्भवन्ति स्वरे परे पदान्ते । प्रत्यङ् इदम् प्रत्यङ्ङिदम् । सुगण् इह—सुगण्णिह । राजन् इह—राजन्निह ॥ **छः** ॥ ह्रस्वादुत्तरश्छकारो द्विर्भवति ॥ **खसे चपा झसानाम्** ॥ झसानां खसे परे चपा भवन्ति । तव छत्रम्—तवच्छत्रम् ।क्वचिद्दीर्घादपि वक्तव्यः ।*। ह्रीछः ह्रीच्छः। म्लेछः म्लेच्छः॥**मोऽनुस्वारः**॥ मकारस्यानुस्वारो भवति हसे परे पदान्ते। तम् हसति-तं हसति। पटुम् वृथा पटुं वृथा॥ **नश्चापादान्ते झसे** ॥ नकारस्य मकारस्य चापदान्ते वर्तमानस्यानुस्वारो भवति झसे परे । यशान् सि यशांसि । पुम् भ्याम्—पुम्भ्याम् ।

ङ्णन इति । यद्यपि कुर्वन्नास्ते इत्यादौ नस्य द्वित्वे पूर्वस्यापदान्तत्वाण्णत्वप्राप्तिस्तथाप्यवकुप्वन्तरेऽपीत्यत्र वेङ्चोरित्यतो वानुवृत्तेर्न । केचित्तु पदान्तस्यैव द्वैधाभावाद्दलितमुद्गादिदले तदीयव्यपदेश इवात्रापि पूर्वस्यापि पदान्तत्वाण्णत्वं नेत्याहुः । दीर्घादपीत्यपिशब्दाद्वक्तव्यत्वाद्वा　आङ्माङ्मामन्यस्मात्पदान्ताद्दीर्घाद्वा आङ्माङोरपदान्ताच्चदीर्घान्नित्यामिति विवेकः । अ इत्यनुस्वारस्य संज्ञापूर्वकत्वेनानित्यत्वात्क्विबन्ते राजतौ समो मस्य नानुस्वार इति सम्राडित्यादि ॥

**यमा यपेऽस्य वा** ॥ अनुस्वारस्य यमा वा भवन्ति यपे परे। अस्य यपस्य सवर्णाः। तं करो-

ति तङ्करोति। तं तनोति-तन्तनोति। संयन्ता-सँय्यन्ता॥ **यवलपरे यवला वा॥** अनुस्वारस्य यवलपरे अनुनासिका यवला वा भवन्ति। संवत्सरः-सँव्वत्सरः । यं लोकम्-यँल्लोकम् ॥ **ँछन्दसि॥** छन्दस्यनुस्वारो ँकारमापद्यते शषसहरेफेषु परतः। हंस-हँसः॥ **स्वरे मः॥** अनुस्वारस्य मकारादेशो भवति स्वरे परे। अस्माकं इह-अस्माकमिह। सं अस्ति-समस्ति। सुखं एति-सुखमेति॥ इति व्यञ्जनसन्धिः॥

यमा इति। शे चर्वेत्यतो वानुवृत्तेस्तस्य च व्यवस्थितार्थत्वादपदान्ते अङ्कित इत्यादौ नित्यम्। त्वं करोषीत्यादौ पदान्ते च वा वाशब्दाल्लोपाद्वा मनयवलपरे हकारेऽनुस्वारस्य यथासंख्ये न मनयवला वा भवन्ति। ततश्च किम्ह्मलयति-किंह्मलयति। किन्न्हुते-किन्हुते। कियँह्यः-किंह्यः। किँव्ह्वलयति-किंह्वलयति। किलँल्ह्लादयति-किंल्हादयतीत्यादयो ज्ञेयाः। प्रचुरप्रयोगाभावाच्चेह नोक्ताः॥ इति सारस्वतप्रसादे व्यञ्जनसन्धिः॥

**अथ विसर्गसन्धिर्निगद्यते॥ विसर्जनीयस्य सः॥** विसर्जनीयस्य सकारो भवति खसे परे। कः तनोति-कस्तनोति।

विसर्जनीयस्य स इति। अवपरस्य विसर्जनीयस्यौत्वरेफलोपशादिविशेषविधेः परिशेषत्वात् खसपरत्वोक्तिः॥ अत्रापि वानुवृत्तेः।

**शषसे वा॥** विसर्जनीयस्य शषसे परे वा

सकारो भवति। कः शेते—कश्शेते। कः षण्ढः कष्षण्ढः। कः साधुः—कस्साधुः॥

शषसे वेति। कः शेते-कश्शेते। कः षण्ढः कष्षण्ढः। कः साधुः कस्साधुरित्यादि। तथा कः त्सरुरित्यादौ शसपरे खभे च सो न भवत्येव। तथा खसे वा विसर्गलोपात् हरिस्फुरति-हरिः स्फुरतीत्यादि॥

कुप्वोः ᳲक ᳲपौ वा॥ विसर्जनीयस्य कवर्गपवर्गसम्बन्धिनि खसे परे ᳲक ᳲपौ वा भवतः। कपावुच्चारणार्थौ। कः करोति-कᳲकरोति। कः पचति कᳲपचति। कः पठति-कᳲपठति। वाचस्पत्यादयः संज्ञाशब्दाः निपातात्साधवः। यल्लक्षणेनानुत्पन्नं तत्सर्वं निपातात्सिद्धम्। वाचः पतिः—वाचस्पतिः॥ तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्तलोपश्च।*॥ तत् करः—तस्करः। बृहत् पतिः—बृहस्पतिः॥

कुप्वोरिति। अत्रापि वाग्रहणात्कस्कादिषु ᳲकᳲपयोरभावे औत्सर्गिकः सः। कस्कादयश्च विहितलक्षणाः प्रयोगतो ज्ञेयाः। कपावितावित्ति केवलयोर्वज्राकृतिगजकुंभाकृतिवर्णयोरुच्चारणासंभवात्कपा उपात्तावित्यर्थः॥

अह्नो रो रात्रिषु॥ अह्नो विसर्जनीयस्य पदान्ते रो भवति रात्र्यादिगणवर्जितेषु परतः। अहः पतिः—अहर्पतिः। अहः गणः—अहर्गणः। अरात्रिष्विति विशेषणात् अहः रात्रम्—अहोरात्रम्।

अहः रूपम् अहो रूपम् । अहः रथन्तरम्-अहोरथन्तरम् ।

अह्न इति । पदान्त इत्यनुवर्तते वाशब्दश्च । ततश्चाहोभ्यामित्यादावपदान्तेन वा शब्दस्य च व्यवस्थितार्थत्वादहरहः अहर्गण इत्यादौ नित्यं अहर्पतिरहः पतिरित्यादौ वा । अरात्रिष्विति बहुवचनाद्रूपरात्रिरथन्तररम्यादिषु रेफादिषु रेफाभावः । अहोरूपम् । अहोरात्रः । अहोरथन्तरम् । अहोरम्यम् ॥

**अतोऽत्युः ॥** अकारात्परस्य विसर्जनीयस्योकारो भवति अति परतः । कः अर्थः-कोऽर्थः ॥ **हबे ॥** अकारात्परस्य विसर्ज्जनीयस्योकारो भवति हबे परे ॥ कः गतः-कोगतः । देवः याति-देवोयाति । मनः रथः-मनोरथः ॥

अत इति । यद्यपि कः अर्थ इत्यादावादबे लोपश् इति लोपशपि प्राप्नोति, तथापि सावकाशनिरवकाशयोर्निरवकाशो विधिर्बलवान् " इत्युक्तविधेर्निरवकाशत्वादुत्वम् । उत्वे चान्तरङ्गत्वादोकारेकादेशे पश्चादेदोतोऽत इत्यलोपः ॥

**आदबे लोपश् ॥** अवर्णात्परस्य विसर्जनीयस्य लोपश् भवति अबे परे । देवाः अत्र-देवा अत्र । वाताः वान्ति-वाता वान्ति ॥ **स्वरे-यत्वं वा ॥** अवर्णात्परस्य विसर्जनीयस्य स्वरे परे यत्वं वा भवति । देवाः अत्र-देवायत्र ॥

आदिति । ननु नामिनः परस्य विसर्ज्जनीयस्य विशेषविधेर्हसाच्च तस्यासम्भवात्परिशेषादेवावर्णपरत्वप्राप्तावाद्वचनं व्यर्थमिति चेत्

नैवम् । स्वरे यत्वं वेत्यत्रावर्णात्परस्यैव विसर्जनीयस्य यत्वविध्यर्थत्वात् । अन्यथा हरिरत्रेत्यादौ यत्वविधिप्रसङ्गात् ॥

**भोसः ॥** भोस् भगोस् अघोस् इत्येतस्मात्परस्य विसर्ज्जनीयस्य लोपश्च भवत्यबे परे । भोः एहि भोएहि । भगोः नमस्ते भगोनमस्ते । अघोः याहि अघोयाहि ॥

भोस् भगोस् अघोस् इति सूत्रे भवद्भगवदघवच्छब्दनिपातानां प्रत्याहारेण ग्रहणात्त्रिभ्योऽप्येभ्यो विसर्जनीयस्य लोपश्च स्वरे यत्वं वेत्यस्यानुवृत्तेर्भोयेहीत्याद्यपि यकारस्य लघुप्रयत्नतरं च लोकात् ॥

**नामिनो रः ॥** नामिनः परस्य विसर्ज्जनीयस्य रेफो भवत्यबे परे । अग्निः अत्र–अग्निरत्र । पटुः यजते पटुर्यजते । **उषसो रो बुधे ॥** उषसो विसर्ज्जनीयस्य रेफो भवति बुधे परे । उषः बुधः–उषर्बुधः ॥ **रेफप्रकृतिकस्य खपे वा ॥** रेफप्रकृतिकस्य विसर्जनीयस्य खपे परे वा रेफो भवति । गीः पतिः–गीर्पतिः–गीष्पतिः ॥ **रः ॥** रेफसम्बन्धिनो विसर्जनीयस्य रेफो भवत्यबे परे । प्रातः अत्र–प्रातरत्र । अन्तः गतः–अन्तर्गतः ॥ **रि लोपो दीर्घश्च ॥** रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः । पुनः रमते–

---

१ लघुः प्रयन्त उच्चारणं यस्य तल्लघुप्रयत्नं अतिशयेन लघुप्रयत्नं लघुप्रयन्ततरं लघूच्चारणमित्यर्थः । तदुक्तं भट्टोजिना–" यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं स लघूच्चारणः " इति । २ ज्ञातव्यमिति शेषः ।

पुनारमते । शुक्तिः रूप्यात्मना भाति-शुक्ती-रूप्यात्मना भाति ॥

नामिन: इति । यद्यपि हसेभ्यो विसर्जनीयस्यासम्भवादवर्णात्परस्य चोत्वलोपशोः सत्त्वात्परिशेषादेव नामिन इति सिद्धौ नाम्युपादानमपार्थकं तथापि रेफप्रकृतिकस्य खपे वेत्यत्र नामिन एव यथा स्यान्न प्रातः प्रातरित्यादावित्याद्यर्थम् । यत्तु नामिग्रहणादत्र प्रथमैकवचनान्तत्वमुत्तरत्र षष्ठ्येकवचनान्तत्वमवसीयत इति । तदसत् । तदुपादानेऽपि सन्देहसत्त्वाद्व्याख्यानतो विशेषप्रतिपत्तेश्च तुल्यत्वात् प्रातःप्रातरित्यादौ कल्पनान्तरापाताच्च । रेफप्रकृतिकस्येत्यत्र वाशब्दस्य व्यवस्थिताव्यवस्थितार्थत्वेन चिकीः करोतीत्यादावनातिप्रसङ्गः । वानुवृत्तेर्लोकाद्वा । उषर्बुध इत्यादावुषसो नित्यं बुधे रः ॥

**सैषाद्धसे ॥** सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश् भवति हसे परे-सः चरति स चरति । एषः हसति एष हसति ॥

सैषादिति । सश्च एषश्च सैषं तस्मात् । अत्र यद्यपि तदेतदोर्ग्रहणे विभक्तिलोपे निमित्ताभावे नैमितिकस्याप्यभावात्तदेतदोर्हस इति स्यात् तैरेतैरित्यादावपि लोपप्राप्तिश्च सकारएषशब्दमात्रग्रहणे सो नः पुंसः एषणं एट्ट तस्य एषः इत्यादावपि लोपप्रसङ्गस्तथापि किलातषस्सः कृतस्येत्यादिनिर्देशाज्ज्ञापकात्तद एव सोऽत्र तत्साहचर्यादेषोऽप्येतद इति विज्ञायते।एषको रुद्र इत्यादावेतच्छब्दपरत्वाभावान्न लोपः। वानुवृत्तेरसः शिव इत्यादौ नञ्समासेऽपि न ।

सैषादिति संहिता ॥ सैष दाशरथी रामः सैष राजा युधिष्ठिरः ॥ सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ १ ॥ इत्यादौ पादपूरणे सन्ध्यर्थो । यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत् ॥

सेमां भूम्याददे सोषामित्यादीनामदुष्टता ॥ २ ॥

बालबोधाय ऋजुत्वेनैव तदेतदोरिति वाच्ये श्लिष्टप्रयोजनमाह ॥ सैषादितीत्यादि ॥ सैषादिति संहिता । सा इत्यादौ सन्ध्यर्थेत्यन्वयः । लोपशि पुनर्न सन्धिरिति सन्धिनिषेधात्सन्धौ सति पादपूरणमस्मान्निर्देशात्सन्धिरित्यर्थः । वेदे पुनः सर्वविधेरपि नियमो नेत्याह यदुक्तमिति । सः इमां भूमिं आददे सः उषां इत्यादौ सन्धिः नामिन इति योगविभागात्क्वचिन्नामिनः परस्य विसर्जनीयस्य लोपशि सन्धिः । भूमीत्यमो लुग्वा । बहूनर्थान् लातीति बहुलमिति ॥

क्वचिन्नामिनोऽवे लोपश् ॥ नामिनः परस्य विसर्जनीयस्य क्वचिल्लोपश् भवत्यवे परे । भूमिः आददे भूम्याददे । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ॥ विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ ३ ॥ वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ॥ धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ ४ ॥ वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ॥ षोडशादौ विकारः स्याद्वर्णनाशः पृषोदरे ॥ ५ ॥ वर्णनाशविकाराभ्यां धातोरतिशयेन यः ॥ योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ६ ॥ इति विसर्गसन्धिः ॥

तदर्थानाह ॥ क्वचिदिति । विदधातीति विधिः । सूत्रं बहुलमेव बाहुलकम् । कुतः एतादित्यतो निरुक्तमूलतामाह । वर्णागम इति । धातोः प्रसिद्धो योऽर्थस्तस्यातिशय उत्कर्षस्तेन योगः स चासावर्थश्च

तदर्थः तस्यातिशयः स तथा निरुक्तमवयवव्युत्पत्तिप्रकटनम् । पञ्चप्रकारकं कथ्यत इत्यर्थः । तदुदाहरति–वर्णागम इति । हिनस्तीति सिंह इत्यत्र हिसि हिंसायामित्यस्य हसकारयोर्विपर्ययः । षोडशेत्यत्र ष्टुत्वेन दस्य डत्वे षस्योकारो विकारः । " पृषन्मृगे बिन्दौ वा " इत्यभिधानात्पृषतो मृगविशेषस्येवोदरं यस्य स पृषोदर इत्यत्र पृषतस्तकारनाशः । मह्यामतिशयेन रौतीति मयूरः । भ्रमन् अतिशयेन रौतीति भ्रमरः ॥ इति श्रीभट्टवासुदेवविरचिते सारस्वतप्रसादे पञ्चसन्धिप्रकरणम् ॥

श्रीचण्डीश्वरशिष्येण वासुदेवेन दीपिते ॥
सारस्वतप्रसादेऽभूत्पञ्चसन्धिनिरूपणम् ॥ १ ॥

**अथ विभक्तिर्विभाव्यते ॥ स। द्विधा । स्यादिस्त्यादिश्च ॥ विभक्त्यन्तं पदम् ॥ तत्र स्यादिर्विभक्तिर्नाम्नो युज्यते ॥**

अथ विभक्तिर्विभाव्यते । विभज्यते कर्तृकर्माद्यर्थौ यया सा विभक्तिः विभक्त्यन्तमिति । विभक्तिः स्वरूपेण कार्यतो वान्ते यस्य तत्पदसंज्ञमित्यर्थः ॥

**अविभक्ति नाम ॥ विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते ॥ कृत्तद्धितसमासाश्च ॥ प्रातिपदिकसंज्ञा इति केचित् ॥**

नामस्वरूपमाह । अविभक्ति इति । " नकारौ द्विविधौ ज्ञेयौ पर्युदासप्रसज्यकौ ॥ पर्युदासः सदृग्ग्राही निषेधार्थः प्रसज्यकः " ॥ इति द्विविधो नञ् । तत्र " प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता ॥ पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् " ॥ इति नामसंज्ञाविधेः प्रधानत्वादुत्तरपदयुक्तत्वाच्चात्र पर्युदासः । ततश्च नञिव युक्तमन्यसदृशेऽर्थे इति नञ्युक्तविभक्तेरर्थवत्तया सदृशेऽर्थवति

विभक्तिभिन्नं वर्तमानत्वाद्विभक्तिरहितमर्थवदित्युक्तम् । विभक्तीनां प्रत्ययान्तत्वात्प्रत्ययग्रहणेन तदन्तस्येति विभक्त्यन्तभिन्नमित्यर्थः । ततश्च कुण्डे वृक्षान् अहन् इत्यादौ विभक्त्यन्तत्वेन नामत्वाभावाद्ध्रस्वनलोपादि न । अर्थवद्ग्रहणेन धनं वनमित्यादौ नान्तावधेर्नामत्वाभावान्न लोपाभावः । नच नामत्वेन विभक्त्युत्पत्तौ विभक्त्यन्तत्वान्नामत्वाभावान्नलोपो न स्यादिति वाच्यम् । नाम्नोनो लोपश् धावित्यत्र धिविषये नलोपनिषेधसामर्थ्यात्पदान्तानुवृत्तिसार्थक्याय नलोपे विभक्त्यन्तस्यापि राजेत्यादिषु नामत्वाश्रयणात् । तन्वः तन्म इत्यादावनामत्वेऽपि रसादिस्यादिपरत्वाभावान्न रसे इत्यस्य तथैव व्याख्यास्यमानत्वात् । ज्ञापकस्येष्टमात्रविषयत्वाच्च । धातूनां तु विशेषतिबादिविधेर्नामकार्याभावाद्धातुवर्जमित्युक्तम् । अत एव येभ्यः क्विबन्तेभ्यो भूप्रभृतिभ्यस्तिबादयो न तेभ्यो नामत्वात्स्यादयो भवन्त्येव । पाणिनिमतोपहासार्थमाह । कृतद्धितेति । केचिदित्यनादरे । अप्रत्यय इति प्रत्ययान्तमात्रस्य प्रातिपदिकसंज्ञां प्रतिषिध्य पुनः प्रतिप्रसवे गौरवमिति भावः । यद्यप्यधित्रि उपकुम्भमित्यादौ विभक्त्यन्तत्वेन नामसंज्ञा न स्यात् तथापि लुग्भावादिविधानसामर्थ्याद्विभक्त्युत्पत्तिः । वस्तुतः शब्दान्तरत्वान्नामत्वम् ॥

**तस्मात् सि औ जस् अम् औ शस् टा भ्यां भिस् ङे भ्यां भ्यस् ङसि भ्यां भ्यस् ङस् ओस् आम् ङि ओस् सुप् ॥**

**तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति । तत्राप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचने देव सि इति स्थिते इकार उच्चारणार्थः ॥**

नामसंज्ञाप्रयोजनमाह । तस्मात् इति । द्विपदमष्टपदं वा

द्वाविंशत्पदं वा। तत्र सप्तत्रिकस्य क्रमेण प्रथमाद्वितीयादिसंज्ञा। तत्राप्येकैकस्य क्रमेणैकवचनद्विवचनबहुवचनसंज्ञा लोकसिद्धा एव। प्रथमैकवचने सिरित्यादिना तत्र तत्र वक्ष्यति। अस्य च लिङ्गार्थे प्रथमेत्यादिभिरेकवाक्यत्वात्। तत्रापीत्याद्युक्तम्। अर्थमात्रस्य कारकविशेषविवक्षाशून्यस्य लिङ्गादेरर्थस्य विवक्षायां प्रथमा। तत्रापि तद्गतैकत्वे एकवचनम्॥

**स्रोर्विसर्गः॥** सकाररेफयोर्विसर्जनीयादेशो भवति अधातो रसे पदान्ते च। देवः। द्वित्वविवक्षायाम्। देवौ। बहुत्वविवक्षायां प्रथमाबहुवचने जस्। जकारस्येत्संज्ञा। इत्संज्ञायां तस्य लोपः प्रयोजनं जसीति विशेषणार्थः। देव अस् इति स्थिते। दीर्घविसर्गौ। देवाः।

स्रोर्विसर्गः इति। अत्र वसां रसे इत्यतः रसे पदान्ते चेत्यधिकारश्च नाम्नोऽधातोश्चेति पदान्यनुवर्तन्ते। ततश्चाधातो रसे पदान्ते च धातोश्च पदान्ते एव विसर्ग इति विवेकः। ततश्चाचका अबिभ इत्यादौ भवति नहि सोर्बिभर्तीत्यादौ। यद्वा। धातोश्च झसे इत्यत्र धातोरिति योगविभागे स्रोर्विसर्गः पदान्ते चेति सम्बन्धादेतदवसेयम्। द्वित्वविवक्षायाम् अर्थमात्राद्द्वित्वविवक्षायामित्यर्थः। एवमुत्तरत्रापि॥

**[2]अकाराज्जसोऽसुक् क्वचिद्वक्तव्यः।*।** देवासः। ब्राह्मणासः। द्वितीयैकवचने देव अम् इति स्थिते॥ **अम्शसोरस्य॥** समानादुत्तरयोरम्श-

---

१ प्राचीनकृष्णभट्टादिकृतव्याकरणविवरणोक्ता इत्यर्थः। २ एतत्सूत्रस्य छन्दस्येव प्रवृत्तिर्भवति। क्वचिच्छब्देन छन्दसीत्येवावसेयम्। देवासो जनास इत्याद्युदाहरणानां प्रायश्छन्दस्येव प्रवृत्तिर्दृश्यते। न क्वापि लोके प्रवृत्तिः।

सोरकारस्य लोपो भवत्यधातोः । देवम् । देवौ । बहुवचने देव शस् इति स्थिते। शकारः शसीति विशेषणार्थः ॥ सो नः पुंसः ॥ पुँल्लिङ्गात्समानादुत्तरस्य सकारस्य नकारादेशो भवति ।

अकारादिति । असुकः कित्त्वात्तदन्तविधौ " यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते " इति पदत्वाद्विसर्गः । सामान्यतो विधावप्याबन्ते वा रूपे विशेषाभावेऽपि कित्करणं मध्यविधिनिरासार्थम् । न च विधानसामर्थ्यादेव मध्ये न स्यादिति वाच्यम् । तस्य संयोगान्तलोपविधेर्दीर्घविधेर्वा निवर्त्तकत्वप्रसङ्गात् ॥

शसि ॥ शसि परे पूर्वस्य स्वरस्य दीर्घो भवति यदादेशस्तद्वद्भवति नतु वर्णमात्रविधौ । देवान् । तृतीयैकवचने । देव टा इति स्थिते टकारोऽनुबन्धः टेनेति विशेषणार्थः ॥ टेन ॥ अकारात्परष्टा इन भवति देवेन ॥ अद्भि ॥ अकारस्य आकारादेशो भवति भकारे परे । देवाभ्याम् ॥

शसीति । तस्मिन्निति निर्दिष्टे पूर्वस्येति पूर्वस्य । यद्यप्यत्र सामान्येनोक्तं तथापि स्वरस्यैव । अचश्चेति नियमात् । अतोऽनडुह इत्यादौ नातिप्रसङ्गः । वर्णमात्राश्रितविधेरन्यत्र यदादेशस्तद्वद्भवतीति एकदेशविकृतमनन्यवद्भवतीति च शसोऽलोपे नकारादेशे च तत्कार्यं स्यादेव ॥

स्भ्यः॥ अकारात्परस्य भिसो भकारस्याकारादेशो भवति। अइ ए। एऐ ऐ। विसर्जनीयः॥ देवैः

अकारस्य भिसि च्छन्दस्येकारो वा

वक्तव्यः। ❋। देवेभिः। कर्णेभिः। चतुर्थ्येकवचने देव ङे इति स्थिते। ङकारो ङित्कार्यार्थः सर्वत्र॥ **ङेरक्**॥ अकारात्परस्य ङे इत्येतस्यागागमो भवति। कित्त्वादन्ते। ए अय् दीर्घः। देवाय। देवाभ्याम्। पूर्ववत् चतुर्थीबहुवचने देव भ्यस् इति स्थिते॥ **एस्भि बहुत्वे**॥ अकारस्य एत्वं भवति सकारे भकारे च परे बहुत्वे सति। देवेभ्यः॥

भ्यइति। भि अ इति छेदः। संज्ञैकदेशा अपि संज्ञिनो भवन्तीति न्यायात् सत्यभामा सत्येतिवत् भीस् भीत्यनेन उच्यते। वैपरीत्यं लाघवार्थम्। केचित्तु भ्य इत्येव पेठुः तस्य च भि अ इति छेदः। भीति स्थानसप्तमी तत्र भ्यस्येत्वविशेषविधेः भ्यामि चाद्यन्ताभ्यामिति निर्देशाज्ज्ञापकादद्भीत्यात्वे परिशेषाद्भिसो भकारस्थाने एकारादेश इत्याहुः। अन्तरङ्गत्वेनादौ प्रत्ययकार्यम्। नन्वसिद्धं बहिरङ्गमिति न्यायादन्तरङ्गे एकारे क्रियमाणे बहिरङ्गोऽकारादेशोऽसिद्धः स्यादिति चेन्न। नाजानन्तर्य्ये बहिरङ्गत्वक्लृप्तिरिति प्रतिषेधात्॥

पञ्चम्येकवचने देव ङसि इति स्थिते। **ङसिरत्**॥ अकारात्परो ङसिरद्भवति। दीर्घः। देवात्। देवाभ्याम्। देवेभ्यः। षष्ठ्येकवचने देव ङस् इति स्थिते॥ **ङस् स्य**॥ अकारात्परो ङस् स्यो भवति। देवस्य। षष्ठीद्विवचने देव ओस् इति स्थिते॥ **ओसि**॥ अकारस्य ओसि परे

एत्वं भवति । ए अय् । देवयोः ॥ नुडामः ॥ समानात्परस्यामो नुडागमो भवति। टित्त्वादादौ। टकार उच्चारणार्थः ।

ङ्मिरदिति। अद्विधानसामर्थ्यात्समानादित्यादिनिर्देशात्तद्धितप्रकरणत्वाद्वानुवृत्तेश्च विभक्तिस्वरे यस्य लोप इत्यलोपाभावः । वावसाने इत्यत्र वाशब्दस्य व्यवस्थितार्थत्वाद्देवादित्यादौ तदभावः ।

नामि ॥ नामि परे पूर्वस्य दीर्घो भवति । देवानाम् । सप्तम्येकवचने देव ङि इति स्थिते अइ ए । देवे । देवयोः । पूर्ववत् । सप्तमीबहुवचने देव सुप् इति स्थिते पकारस्येत्संज्ञायां लोपः । एस्भि बहुत्वे ।

नामि इति । नुट्सहित आम् नाम् तस्मिन् । अतो दण्डिनामित्यादौ दीर्घत्वाभावः ॥

क्लिात्षः सः कृतस्य ॥ कवर्गादिलाच्च प्रत्याहारादुत्तरस्य केनचित्सूत्रेण कृतस्य सकारस्य षकारादेशो भवति । देवेषु ।

क्लिादिति । कुश्च इलश्च क्लिं तस्मात् षर्नो णोऽनन्ते इत्यतोऽनन्ते इत्यनुवृत्तेर्हरिस्तत्रेत्यादौ षत्वाभावः । सः षः इति वाच्ये विपरीतनिर्देशान्नुम् । विसर्ज्जनीयशसव्यवधाने षत्वम् । हवींषि । हविःषु । हविष्षु इत्यादि । तथा सातेः पदादेश्च सस्य षो नेति । दधि सिंचति । अग्निसादित्यादिसिद्धिः ॥

आमन्त्रणे सिर्द्धिः॥ आमन्त्रणमभिमुखीकरणं तस्मिन्नर्थे विहितः सिर्द्धिसंज्ञो भवति ।

आमन्त्रणे इति । लिङ्गार्थे प्रथमेत्यतोऽनन्तरमिदं सूत्रम् । तत्रामन्त्रणे इति योगविभागादामन्त्रणे अभिमुखीकरणेऽर्थे प्रथमेति सिर्द्धिरित्यपरयोगविभागादामन्त्रणार्थकः सिः धिसंज्ञक इत्यर्थः ॥

**समानाद्धेर्लोपोऽधातोः ॥** समानादुत्तरस्य धेर्लोपो भवत्यधातोः । आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक् प्रयोगः । हे देव । हे देवौ । हे देवाः । एवं घटपटस्तम्भकुम्भादयोऽप्यकारान्ताः पुँल्लिङ्गाः ॥

समानादिति । दधात्यनेकानर्थानिति धातुर्यौगिको ज्ञेयः । ततश्च धातोः समानादिति समानाधिकरण्यम् । अनेकार्थात्समानादित्यर्थः । अतश्चास्मिन्सूत्रे ह्रस्वसमानार्थताऽवसेया । ततश्च हे हाहाः हे हूहूरित्यादावधातोरपि समानान्न हे सोमपमिति कुलविषणे एकदेशविकृतमनन्यवद्भवतीति । प्रकृष्टा धीः प्रधीरिति नित्यस्त्रीत्वे नदीसंज्ञायां ह्रस्वत्वे च हे प्रधि इत्यादौ धातोरपि समानाल्लोपः । तथाऽम्शसोरस्येत्यत्रापि ह्रस्वदीर्घसाधारणानुवृत्तेः सोमपमित्यादौ धातोरपि तथा । सो नः पुंस इत्यत्र कृताकारवर्ज्जं ह्रस्वदीर्घसाधारण्येनेति । हाहान् हूहून् । वातप्रमीन् इत्यादिप्रयोगाः । अत्र च न तथा नुडाम इत्यत्र पुंनपुंसकयोर्ह्रस्वादेव । स्त्रियां च नित्यस्त्रीलिङ्गानामिकारान्तोकारान्तानामाबन्तानां च दीर्घादपीति । ततश्च सोमपानां कुलानामित्यादौ धातोरपि समानान्नुट् । केचित्तु तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वेनाधातुसमानपदयोस्तात्पर्यवशात्तादृशोऽर्थस्तत्र तत्र कल्प्य इत्याहुः ॥

**अकारान्तानामपि सर्वादीनां तु विशेषः ॥** सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम कतर कतम सम सिम नेम एक पूर्व पर अवर

**दक्षिण उत्तर अपर अधर स्व अन्तर त्यद् तद् यद् एतद् इदम् अदस् द्वि किम् युष्मद् अस्मद् भवतु एते सर्वादयस्त्रिलिङ्गाः । तत्र पुँलिङ्गत्वेन रूपं ज्ञेयम् ।**

अकारान्तत्वेन देववत्प्राप्तावाह । अकारान्तानामपीति । देवशब्दात्कश्चिद्विशेष इत्यर्थः । सर्वादिपठितयोरपि त्वतत्वशब्दयोश्छान्दसत्वाल्लौकिकप्रयोगाभावादनुपादानम् । उभयशब्दस्य द्विवचनान्तत्वात्सर्वादिकार्यासम्भवेऽपि सर्वनाम्नस्तृतीया चेति सर्वनाम्नो हेतुयोगे तृतीयाविधेरुभाभ्यां हेतुभ्यामित्यादिसिद्ध्यर्थमुपादानम् । अन्यतरशब्दोऽव्युत्पन्न एव न तु डतरान्तः किंयत्तद्भ्य एव तद्विधेः । अतो डतरप्रत्ययान्तत्वेन प्राप्तौ पुनरुपादानादन्यतरशब्दस्य सर्वादित्वाभाव इत्यसत् । समशब्दः सर्वपर्यायः । न तुल्यार्थः । एवं सिमशब्दोऽपि । नेमशब्दः खण्डार्थः । एषां च सर्वेषां नामानि सर्वनामानीत्यन्वर्थताविज्ञानात्सर्ववाचित्वे एव सर्वादिकार्यं न संज्ञागौणत्वयोः । तथा लोकात्पूर्वादीनां स्वाभिधेयापेक्षावधिनियमे एव संज्ञागौणत्वयोर्नेति सर्वत्र । अतो दक्षिणा गाथका इत्यादाववधिनियमाभावादुत्तराः कुरव इत्यादौ संज्ञात्वाच्च न । तथा राज्ञः समायेत्यादौ तुल्यार्थत्वेन समस्यापि न । तथा परिधानबहिर्योगार्थस्यान्तरस्यापुरीवाचकस्येत्यन्तरायां पुरीत्यादौ न । तथार्थज्ञात्यन्यवाचिन एव स्वशब्दस्य नेह । स्वाय ज्ञातयेऽर्थाय वा । तथा वर्णाश्रमेतरे वर्णाश्रमेतरा इत्यादौ द्वन्द्वे जसि वा नान्यत्र । तथा तृतीयासमासात्तद्वाक्ययोरपि नेति । मासपूर्वाय मासेन पूर्वायेत्यादि । तथा बहुव्रीहिसमासावयवस्य प्रधानभूतस्यापि सर्वादित्वं नेति । त्वं पिता यस्याहं पिता यस्य स त्वत्कपितृको मत्कपितृक इत्यादि । अन्यथाऽव्ययसर्वनाम्नामकच्प्राक्टेरित्यकचि त्वकत्पितृको मकत्पितृक इति स्यात् । दिक्समासे

बहुव्रीहौ च वेति । उत्तरस्याः पूर्वस्याः अन्तरालं दिक् उत्तरपूर्वा तस्यै उत्तरपूर्वस्यै--उत्तरपूर्वायै इत्यादि प्रयोगानुसारतो यथायथमूह्यम् ॥

**जसी ॥ सर्वादेरकारान्तात्परो जस् ई भवति ।**

**सर्वः सर्वौ । सर्वे । सर्वम् सर्वौ । सर्वान् ।**

जसी इति । अत्र केचित् एकमात्रालाघवेन वैयाकरणाः पुत्रोत्सवं मन्यन्त इति न्यायेन जसि इत्येव पेठुः । दीर्घविधेः प्रयोजनाभावात् । न च दीर्घविधौ द्विमात्रत्वेन गुरुत्वाद्गुरुः । शित्व सर्वस्य वक्तव्य इति सर्वस्य जसः स्यादिति वाच्यम् । तस्य षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य वक्तव्य इत्यन्तविधेरपवादत्वात् । अत्र च षष्ठीनिर्देशाभावान्निर्दिश्यमानस्यादेशा भवन्तीति सर्वस्यैव जसः स्यात् । नच औ इत्युत्तरसूत्रे दीर्घेकारानुवृत्तौ केचिन्मते पूर्वविप्रतिषेधेनादावीकारादेशो जरसादेशे च जरसीत्यादिसिद्ध्यर्थं दीर्घविधानमिति वाच्यम् । कृताकृतप्रसङ्गित्वेन जरसादेशस्य नित्यत्वादादौ स एव स्यात् । केचिन्मतोपसङ्ग्रहार्थं धिरीत्यनन्तरसूत्र एव दीर्घविधानौचित्यादाह । अत एव धिरीत्येव क्वाचित्पाठः । क्वचिच्चौरीत्यपि सर्वत्र सूत्रपाठादौ जसी इत्येव पाठ इति चेत् । तथापि जसि ई इति छेदः । जसि इति स्थानसप्तमी । अन्ये तु जस इति साङ्केतिकं षष्ठ्यन्तमेवेति । अन्त्यस्य प्राप्तौ सर्वादेशार्थं गुरुकरणम् । तदसत् । गुरुः शित्व सर्वस्येत्यत्र गुरुशब्दस्यानेकवर्णादेशोपलक्षकत्वस्य त्रेरयङित्यत्र ङित्करणेन ज्ञापनात् । अन्यथा दिव औ इत्यादौ औकारादीनां द्विमात्रत्वेन गुरुत्वात्सर्वादेशप्रसङ्गात् ॥

**षुनों णोऽनन्ते ॥ षकाररेफऋवर्णेभ्यः परस्य नकारस्य णकारादेशो भवति । अन्ते स्थितस्य न भवति । सर्वानित्यादौ ।**

षुरिति । षू च र् च आ च एषां समाहारः षृ तस्मात् षृः । अत्र रेफात्परस्यापि नस्य णत्वाकरणम् समानपद एव णत्वविधिज्ञापकम् ॥

**अवकुप्वन्तरेऽपि ॥ अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि भवति नान्येन । सर्वेण । सर्वाभ्याम् । सर्वैः ।**

अवेति । अवप्रत्याहारः कुः कवर्गः पुः पवर्गः एतैर्व्यस्तैः समस्तैर्वान्तरे व्यवधानेऽपि पूर्वोक्तनिमित्तान्नस्य णत्वमित्यर्थः । अपिशब्दोऽनुक्तसमुच्चयार्थः । तेन पर्याणद्धमित्यादौ आङ्पद-व्यवधानेऽपि णत्वम् । तथा च अनुस्वारविसर्जनीय ᳵक ᳶपव्यव-धानेऽपि रिङ्गणम् । उरः केण-उरᳵकेण । उरः पेण-उर-ᳶपेणेत्यादि ॥

**सर्वादेः स्मट् ॥ सर्वादेरकारान्तात्परस्य चतुर्थ्येकवचनस्य स्मडागमो भवति । सर्वस्मै । सर्वाभ्याम् । सर्वेभ्यः । पञ्चम्येकवचने सर्व ङसि इति स्थिते ।**

सर्वादेरिति । अत्र यद्यपि स्मटष्टित्त्वादकश्च कित्वादाद्यन्तस्था-नत्वेनोभयोरविरोधस्तथापि ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्याय तक्रमित्युक्तेः, कौण्डिन्यस्यापि ब्राह्मणान्तःपातित्वाद्दधिदाने प्राप्तेऽपि साक्षाच्छिष्टेन तक्रदानेन बाध्यते । तथाऽत्रापि तक्रकौण्डि-न्यन्यायेन सर्वादेः स्मडेव ॥

**अतः ॥ सर्वादेरकारान्तात्परस्यातः स्मडागमो भवति । सर्वस्मात् । सर्वाभ्याम् । सर्वेभ्यः । सर्वस्य । सर्वयोः ।**

अत इति । विभक्तिप्रकरणत्वाद्विभक्तेरेव ततश्च सर्वमततीति सर्वात् इत्यादावत् सातत्यगमन इत्यस्य क्विपि तल्लोपे सर्वादेः परस्यापि अतः स्मडभावः । ङसिरदित्यतो मण्डूकप्लुत्या विभक्तिविपरिणामेन ङसेरित्यनुवृत्तेर्वा ॥

**सुडामः** ॥ सर्वादेः परस्यामः सुडागमो भवति। सर्वेषाम् ॥ **ङि स्मिन्** ॥ सर्वादेरकारान्तात्परो ङि स्मिन् भवति । सर्वस्मिन् । सर्वयोः। सर्वेषु। एवं विश्वादीनां एकशब्दपर्यन्तानां रूपं ज्ञेयम् । डतरडतमौ विहाय । तौ प्रत्ययौ ततस्तदन्ताः शब्दा ग्राह्याः । **पूर्वादीनां तु नवानां जस ईकारो वा वक्तव्यः** ॥ पूर्वे-पूर्वाः परे-पराः । इत्यादि ॥ **पूर्वादिभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ** ॥ पूर्वस्मात्—पूर्वात् । पूर्वस्मिन्—पूर्वे इत्यादि ।

सुडाम इति । अत्र यद्यपि सामान्येन सर्वादिभ्यः सुड्विधौ सर्वादिगणान्तर्वर्तिनोऽत्रानुक्तस्यापि भवच्छब्दस्य प्रसङ्गः । अद्गीत्यतोऽगदित्यनुवृत्तावाबन्तानामप्रसङ्गस्तथाप्याबन्तानां सुड्विध्यर्थं आप इत्यनन्तरसूत्रमनुवर्तनीयम् । अ आम इति लुप्तपञ्चम्यन्ताद्वर्णप्रश्लेषो वा । विपरीतनिर्देशात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं नतु लाक्षणिकस्येति वां युवामित्यादौ सुट् न । डतरडतमाविति । न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय इति केवलयोस्तयोः प्रयोगासम्भवात् प्रत्ययग्रहणेन तदन्तस्येति तदन्तग्रहणमित्यर्थः ॥

---

१ भाष्यादिरयर्थः ।

प्रथमचरमतयायल्पार्द्धकतिपयनेमानां जसीकारो वा वक्तव्यः ॥ प्रथमे–प्रथमाः। चरमे–चरमाः। शेषं देववत्। तयायडौ प्रत्ययौ ॥ तीयस्य सर्वशब्दवद्रूपं ङित्सु वा वक्तव्यम्॥ द्वितीयस्मै–द्वितीयाय। द्वितीयस्मात्–द्वितीयात् । द्वितीयस्मिन्–द्वितीये। एवं तृतीयः। उभशब्दो नित्यं द्विवचनान्तः। उभौ । उभौ । उभाभ्याम् ३। उभयोः २। उभयशब्दस्य द्विवचनाभावादेकवचनबहुवचने भवतः। उभयः। उभये। उभयम्। उभयान्। उभयेन । उभयैः । उभयस्मै। उभयेभ्यः। इत्यादि। अकारान्तः पुँल्लिङ्गो मासशब्दः।

प्रथमेति। नेमशब्दस्य प्राप्तविभाषात्वाच्छेषं सर्ववत्। अन्येषां त्वप्राप्तत्वाद्देववत्। त्रयीत्यादौ ङीबर्थं तयङयटौ। सङ्ख्याया इत्ययटष्टित्त्वात्तयङयटावित्ययं पाठः। उभयशब्दस्यायङन्तत्वेन विकल्पप्राप्तावपि सर्वादिषु साक्षात्पाठादव्युत्पन्नत्वाद्वा नित्यमेव। अयटश्चावयवार्थकत्वादुभौ अवयवौ यस्येति विग्रहे एकवचनान्वत्वम्। येषामिति च बहुवचनान्तत्वम्। द्वयोरवयविनोर्द्व्यवयवासम्भवादुभयशब्दस्य द्विवचनाभाव आर्थिकः। तीयस्य इति। तीयप्रत्ययान्तप्रातिपदिकस्येत्यर्थः। ततश्च प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति[2] द्वितीयस्यै द्वितीयायै इत्याद्यपि। सजातीयायेत्यादौ तीयप्रत्ययान्तत्वाभावादर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति वा तदभावः॥

---

२ परिभाषेत्यर्थः।

**मासस्याल्लोपो वा ॥** मासशब्दस्याकारस्य लोपो वा भवति सर्वासु[1] विभक्तिषु परतः । माः-मासः । मासौ-मासौ । मासः-मासाः । मासम्-मासम् । मासौ-मासौ । मासः-मासान् । मासा-मासेन । माभ्याम्-मासाभ्याम् । माभिः-मासैः । मासे-मासाय । माभ्याम्-मासाभ्याम् । माभ्यः-मासेभ्यः । मासः-मासात् । माभ्याम्-मासाभ्याम् । माभ्यः-मासेभ्यः । मासः-मासस्य । मासोः-मासयोः । मासाम्-मासानाम् । मासि-मासे । मासोः-मासयोः । मास्सु-मासेषु । हे माः-हे मासः । हे मासौ-हे मासौ । हे मासः-हे मासाः ॥ आकारान्तः पुंलिङ्गः सोमपा शब्दः । सोमपाः । सोमपौ । सोमपाः । आधातोरिति विशेषणाद्वेलोपो नास्ति । हे सोमपाः । सोमपाम् । सोमपौ । बहुवचने सोमपा अस् इति स्थिते ।

**मासस्येति** । मासशब्दस्याकारस्य वा लोपो भवति । शसादौ विभक्ताविति केचित् । पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष्, दोष्, यकृत्, शकृत्, उदक, आस्यशब्देभ्यः पद्, दत् नस्, मास्, हृद्, निश्, असन्, यूषन्, दोषन्, यकन्, शकन्, उदन्, आसन्नादयः शब्दाः पृथगेव लोकाद्वा शस्प्रभृतिष्वेषामेते आदेशा यथासङ्ख्यमूह्याः । लोपस्यादेशविशेषत्वात्षष्ठीनिर्दिष्टत्वादेवान्त्यस्या-

१ अयमर्थश्च 'पद्दन्नोमास' इत्यादिपाणिनीयसूत्रस्य 'शस्प्रभृतिषु' इत्येतदन्तर्गतप्रभृतिशब्दस्य प्रकारवाचित्वाद्बोध्यः ।

कारस्य सिद्धौ अधिकवर्णग्रहणस्याधिककार्यसिद्धे वाशब्दादेषोऽर्थोऽवसेयः । वस्तुतस्तु[1] एतन्मते तु पदादयः पृथक्शब्दा एव ॥

**आतो धातोर्लोपः॥** धातुसम्बन्धिन आकारस्य लोपो भवति शसादौ स्वरे परे । सोमपः । सोमपा । सोमपाभ्याम् । सोमपाभिः । सोमपे । सोमपाभ्याम् । सोमपाभ्यः । सोमपः । सोमपाभ्याम् । सोमपाभ्यः । सोमपः सोमपोः । सोमपाम् । सोमपि । सोमपोः । सोमपासु । एवं कीलालपाशङ्खध्माप्रभृतयः । इकारान्तः पुँल्लिङ्गो हरिशब्दः । प्रथमैकवचने । हरिः ॥ **औ यू ॥** इकारान्तादुकारान्ताच्च परं औ यू आपद्यते । ई ऊ भवतः । हरी ॥ **एओ जसि ॥** इकारान्तस्य उकारान्तस्य च जसि परे एकार ओकारश्च भवति । हरयः ॥ **धौ ॥** इकारान्तस्य उकारान्तस्य च धिविषये एकार ओकारश्च भवति ॥ **समानाद्धेर्लोपोऽधातोः ॥** हे हरे । हे हरी । हे हरयः । हरिम् । हरी । हरीन् ॥ **टा ना स्त्रियाम् ॥** इकारान्तादुकारान्ताच्च परष्टा ना भवत्यस्त्रियाम् । हरिणा । हरिभ्याम् । हरिभिः ॥ **ङिति ॥** इका-

१ अत्र ‘ पदादयः पृथक्छब्दा एव ’ इत्याधिकः पाठो दृश्यते, तत्र ‘एव’ इत्यत्र आदेशा इत्यध्याहार्यपदादयः पृथक्शब्दा आदेशभूता एव भवन्तीत्यर्थः करणीयः ॥

रान्तस्य उकारान्तस्य च ङिति परे एकार ओ-कारश्च भवति । हरये । हरिभ्याम् । हरिभ्यः ॥

आत इति । तत्रा[1]ऽधर्मेण पुनरुच्चार्य्योद्धातोरातो लोपः क्वचिदि-त्यर्थकल्पनात् क्त्वः श्न इत्यादावप्यालोपः । धातोः किम् । हाहान् । क्विबन्तत्वाच्चास्य सोमपाशब्दस्य धातुत्वम् । तदुक्तम् । "शतृशानचू-क्विबन्तानां क्वसन्तानां तथैव च । तृजन्तानां च धातूनां धातुत्वं नोप-हन्यते ॥" इति । धौ तपरस्य तावन्मात्रग्राहकत्वात्सोमपेन कुलेनेत्या-दावप्रसङ्गः । वस्तुतस्तु द्विमात्रोच्चारणसामर्थ्यादेव सवर्णानुपस्थितौ तसन्तमेव सर्वविधिभ्यो लोपविधिर्बलवानिति धिलोपे पश्चात्प्रत्य-यलोपे प्रत्ययलक्षणमिति तदाश्रयकार्यम् ॥

ङस्य ॥ एदोद्भ्यां परस्य ङसिङसोरकारस्य लोपो भवति । हरेः । हरिभ्याम् । हरिभ्यः । हरेः । हर्योः । हरीणाम् ॥ ङेरौ ङित् ॥ इदुद्भ्यामुत्त-रस्य ङेरौ भवति स च ङित् ॥ ङिति टेः ॥ ङिति परे टेर्लोपो भवति । हरौ । हर्योः । हरिषु । एवमग्नि-गिरिरविकविप्रभृतय एतैरेव सूत्रैः सिद्ध्यन्ति । उकारान्ताश्च विष्णुवायुभानुप्रभृतय एतैरेव सूत्रैः सिद्ध्यन्ति । भानुः । भानू । भानवः । भानुम् । भानू । भानून् । भानुना । भानुभ्याम् । भानुभिः । भानवे । भानुभ्याम् । भानुभ्यः । भानोः । भानुभ्याम् । भानुभ्यः । भानोः । भान्वोः । भानूनाम् । भानौ । भान्वोः । भानुषु । हे भानो

---

१ आकारनिष्ठदीर्घत्वरूपधर्मेणेत्यर्थः ॥

इत्यादि । सखिशब्दस्य भेदः ॥ सेर्डाधेः ॥ सखिशब्दात्परस्य सेरधेर्डा भवति । स च डित् । डित्त्वाट्टिलोपः । सखा ॥

ङस्येति । ङकारोपलक्षितो अः ङस्तस्य स च ङसिङसोरेवेत्यभिप्रेत्योक्तं ङसिङसोरकारस्येति ॥

अधेरिति विशेषणादेकारो धिविषये । हे सखे ॥ ऐ सख्युः ॥ सखिशब्दस्यैकारो भवति पञ्चसु परेषु ॥

अधेरिति । ऐ सख्युरित्यत्राधेरित्यनुवृत्तेस्तस्य च विभक्तिविपरिणामेन सप्तमीबहुवचनान्तत्वेन धिवर्जितेषु पञ्चस्वित्यर्थादैकाराभावेऽपीत्यर्थः । अन्यथा सख्युरित्यस्य दुर्वारत्वात् ॥

षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः॥*॥ सखायौ । द्विवचनस्याऽऽवा छन्दसि ॥ द्विवचनस्य औ आ भवति वेदे । सखाया । सखायः । सखायम् । सखायौ । सखीन् ॥

षष्ठीनिर्दिष्टस्येति । षष्ठ्या निर्दिष्टः षष्ठ्यन्तत्वेनोद्दिष्टस्तस्य य आदेशः स तस्यान्तस्य स्यादित्यर्थः । सखायमित्यत्र परत्वात्कृताकृतप्रसङ्गित्वेन नित्यत्वाच्चादावैकारे समानत्वाभावान्नाम्शसोरस्येत्यकारलोपः ॥

सखिपत्योरीक् ॥ सखिपतिशब्दयोरीगागमो भवति । टाङेङिषु परतः ॥

सखिपत्योरिति । ए टाङ्योरित्यतष्टाङ्योरिति ङेइत्युत्तरसूत्राच्च तस्यानुवृत्तेर्ङेः अपीत्यभिप्रेत्योक्तं टाङेङिषु परत इति ॥

दीर्घत्वान्न ना । सख्या । आगमजमनित्यम् । सखिना, पतिना । सखिभ्याम् । सखिभिः । सख्ये । सखिभ्याम् । सखिभ्यः ॥

दीर्घत्वादिति । यद्यपि ह्रस्वविधावपि कृताकृतप्रसङ्गित्वात्प्रथमं सवर्णदीर्घत्वेऽपि ना न स्यात्तथापि तद्विधेर्न्यायान्नित्यत्वज्ञापनात्सप्तम्येकवचने प्रथममौकारः । " सखिना वानरेन्द्रेण " " अन्यत्र पतिना सह " इत्याद्यार्षप्रयोगसिद्ध्यर्थमाह । आगमजमिति । आगमाज्जायते इति आगमजं तदनित्यमित्यर्थः । अनित्यमागमानुशासनमिति परिभाषया इति भावः ॥

ऋङ्ङेः ॥ सखिपतिशब्दयोर्ऋङागमो भवति ङसिङसोरकारे परे । सख्यु अस् इति स्थिते ॥ ऋतो ङ उः ॥ ऋकारान्तात्परस्य ङसिङसोरकारस्य उकारो भवति । स च डित् ॥ डिति टेः ॥ सख्युः । सखिभ्याम् । सखिभ्यः । सख्युः । सख्योः । सखीनाम् । सप्तम्येकवचने ॥ ङेरौ डित् ॥ इत्यौकारे कृते ॥ सखिपत्योरीक् ॥ इतीगागमः । सख्यौ । सख्योः ॥ किलात् षः सः कृतस्य ॥ इति षत्वम् । सखिषु । पतिशब्दस्य प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया । तृतीयादौ तु सखिशब्दवत्प्रक्रिया । पतिः ॥ औ यू ॥ पती ॥ ए औ जसि ॥ पतयः । पतिम् । पती । पतीन् ॥

---

१ नित्यत्वेनेत्यर्थः ॥

सो नः पुंसि।सखिपत्योरीङ्॥पत्या।पतिभ्याम्। पतिभिः। पत्ये।पतिभ्याम्। पतिभ्यः॥ ऋङ्केः। ऋतो ड उः॥ स च ङित्। पत्युः। पतिभ्याम्। पतिभ्यः॥पतिरसमास एव सखिवद्धक्तव्यः॥❀॥ततः समासान्तस्य नादयो भवन्ति। प्रजापतिना। प्रजापतये। इत्यादि। द्विशब्दो नित्यं द्विवचनान्तः। द्वि औ इति स्थिते॥

ऋङ्केः इति। अत्र यदि ङ इति चतुर्थ्येकवचनमभिप्रेतं स्यात्तर्हि ङेइत्यस्यानुवृत्तेरेव पुनर्ग्रहणं न कुर्यात्तस्मात् ङकारो गलक्षितः अः ङस्तस्मिन् ङे इत्यभिप्रेत्याह। ङसिङसोर्ङकार इति। ऋतः तपरकरणे। तावन्मात्रस्यैव ग्रहणादुन्योर्ग्र इत्यादौ गॄ इत्येतस्माद्दीर्घत्वादुत्वाभावः। ऋङ्के इत्यत्र ह्रस्वो वेत्यतो वानुकर्षणाल्लोकाच्च खीतिशब्दाभ्यामपि ग्रहणम्। ततश्च सुखमात्मन इच्छति सुखीयाति सुखीयतीति सुखीः तस्य सुख्युः। एवं सुतमात्मन इच्छति सुतीयाति सुतीयतीति सुतीः तस्य सुत्युः। तथा सह खेन वर्तते इति सखः तमिच्छतीति सखी तस्य सख्युः। तकारस्थानजाद्वर्णादपीष्यते। लूनमिच्छाति लूनीयाति लूनीयतीति लूनीः तस्य लून्युः। वेति केचित्। सुख्युः सुत्युः लून्युः। ननु सखिशब्दस्य सप्तम्येकवचने आदावीगागमे दीर्घत्वादौत्वाभावः। आदावौत्वे टिलोपे च एकदेशविकृतन्यायेन ईगागमे निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायेनौत्वनिवृत्तिः स्यादित्यतो निमित्ताभावन्यायस्यानित्यत्वमभिप्रेत्याह। सप्तम्येकवचन इति। अयं भावः। औत्वस्य ङित्त्वाट्टिलोपे निमित्तयोरिदुतोरभावेन सर्वत्रौत्वनिवृत्त्यापत्त्या तद्विधिवैयर्थ्यापातादनित्यत्वं न्यायस्यावसीयते। लोकेऽपि निमित्त-

दण्डाद्यभावे घटाद्यनपायदर्शनाच्च । शोभनः सखा सुसखेत्यादौ समासेऽपि सखिशब्दप्राधान्ये पञ्चसु[1] तत्कार्यदर्शनादन्यत्र सुसखिना कृतम् अतिसखेरागच्छतीत्यादौ तत्कार्याभावः । पतिरसमास एवेति सखिवदित्यनेन सखिशब्दस्यासमास एवेगादिकार्यं यथा तथा तत्सहोक्तस्य पतिशब्दस्यापीत्यर्थः । अन्यथा सखिकार्यातिदेशे डादेरपि प्रसङ्गः स्यात् । हरिशब्दादिवत्पाक्षिकाद्विवचनान्तत्वे सिद्धे वचनारम्भसामर्थ्यान्नित्यद्विवचनान्तत्वप्राप्तौ नित्यग्रहणं स्पष्टार्थम् ॥

**त्यदादेष्टेरः स्यादौ**॥ त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ । द्वौ । द्वाभ्याम् ३ । द्वयोः । द्वयोः । त्यदादीनां सम्बोधनाभावः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रि जस् इति स्थिते ॥ **ए औ जसि**॥ इत्येकारे कृते अयादेशः । त्रयः ॥ **सो नः पुंसि** ॥ त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः । त्रि आम् इति स्थिते ॥

त्यदादेः इति । त्यशब्देनैकदेशेन समुदायोपलक्षणात् त्यद् आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । नन्वस्य त्यदादित्वादस्य म इति मः स्यादिति चेत् । सत्यम् । ऋङ्के इत्यादाविवात्रापि दकारसहिताकारस्य मकारसहिताकारविधेरत्र च वकारयुक्तत्वात्तदभावः ॥

**त्रेरयङ्** ॥ त्रिशब्दस्यायङादेशो भवति नामि परे ॥

त्रेरिति । त्रिशब्दस्य बहुवचनान्तत्वेऽपि शब्दनिर्देशादत्रैकवचनम् ॥

---

१ स्यादिषु पञ्चप्रत्ययेषु ॥

**ङिदन्तस्य वक्तव्यः॥ ❀ ॥ त्रयाणाम्। क्लिलात्षः सः कृतस्य॥ इति षत्वम्। त्रिषु। कतिशब्दो नित्यं बहुवचनान्तः। कति जस् इति स्थिते॥**

अनेकवर्णादेशत्वेन गुरुत्वात्सर्वस्य प्राप्तावाह। ङिदन्तस्येति। गौणत्वे तु प्रियत्रीणामित्येव॥

**कतिशब्दात् जश्शसोर्लुक् वक्तव्यः॥❀॥ लुकि न तन्निमित्तम्। कति। कति। कतिभिः। कतिभ्यः। कतिभ्यः। कतीनाम्। कतिषु॥**

कतिशब्दादिति। का सङ्ख्या येषामिति शेषा निपात्याः कत्यादय इति डत्यन्तत्वेन निपातितात्कतिशब्दात् डतेश्चेति सूत्रेण जस्शसोर्लुगित्यर्थः। सूत्रे च रः सङ्ख्याया इत्यतः सङ्ख्याया इत्यनुवृत्तेः सङ्ख्यार्थात् डत्यन्तादित्यर्थावगमाद्यातेर्डतिगिति डत्यन्तादपि यतिशब्दान्न लुक्। अत एव "यति ते नाग शीर्षाणि तति ते नाग वेदनाः।" इत्यादौ या सङ्ख्या येषां ते यति सा सङ्ख्या येषां ते ततीत्यादावपि सङ्ख्यार्थडत्यन्तत्वाज्जश्शसोर्लुक् लुकि न तन्निमित्तमित्येकाराभावः॥

**त्रिषु लिङ्गेषु चायं सरूपः। ईकारान्तः पुँल्लिङ्गः सुश्रीशब्दः। सुश्री औ इति स्थिते॥**

त्रिषु चायं सरूप इति। वाच्यलिङ्गत्वेन त्रिलिङ्गत्वम्। बहुवचनान्तत्वेन बहुवचनाभावादिकृतविशेषाभावात्सरूपत्वम्। समानरूपत्वमित्यर्थः। अयमित्युपलक्षणं पञ्चन्प्रभृतीनाम्। तथोक्तम्। "ष्णान्तसङ्ख्याव्ययडतियुष्मदस्मत्सदृक्त्रिषु।" इति॥

**य्वोर्धातोरियुवौ स्वरे॥ धातोरीकारोकार-**

---

१ ङित् ङकारेत्संज्ञक आदेशोऽन्तस्य स्थाने भवतीत्यर्थः॥

योरियुवौ भवतः स्वरे परे। सुश्रीः। सुश्रियौ। सुश्रियः। हे सुश्रीः। हे सुश्रियौ। हे सुश्रियः। सुश्रियम्। सुश्रियौ। सुश्रियः। सुश्रिया सुश्रीभ्याम्। सुश्रीभिः। सुश्रिये। सुश्रीभ्याम्। सुश्रीभ्यः। सुश्रियः। सुश्रीभ्याम्। सुश्रीभ्यः। सुश्रियः सुश्रियोः। सुश्रियाम्। सुश्रियि। सुश्रियोः। सुश्रीषु। तथैव सुधीशब्दः। ऊकारान्तः पुँल्लिङ्गः स्वयंभूशब्दः। स्वयंभूः। स्वयंभुवौ। स्वयंभुवः। स्वयंभुवम्। स्वयंभुवौ। स्वयंभुवः। स्वयंभुवा। स्वयंभूभ्याम्। स्वयंभूभिः। स्वयंभुवे। स्वयंभूभ्याम्। स्वयंभूभ्यः। स्वयंभुवः। स्वयंभूभ्याम्। स्वयंभूभ्यः। स्वयंभुवः। स्वयंभुवोः। स्वयंभुवाम्। स्वयंभुवि। स्वयंभुवोः। स्वयंभूषु। सेनानीशब्दस्याविशेषो हसादौ। स्वरादौ तु विशेषः। सेनानी औ इति स्थिते॥

य्वोरिति। अत्र यद्यपि य्वोरिति ह्रस्वदीर्घसाधारणं तथापि ह्रस्वेकारोकारान्ताक्विबन्तधातुप्रयोगाभावादीकारोकारयोरित्युक्तम्। अत एव न धातोरित्यत्र ते एवानुवर्तमाने य्वोरिति धातोश्चेवर्णोवर्णयोरिति साधारण्येनाभिधास्यति। अमि शसि च परत्वादियुवावेव। विभक्तिप्रकरणत्वाद्विभक्तिस्वरे एव। नस्वर्थमित्यादौ। ईकारान्तमध्येऽपि स्वयंभूशब्दस्य उवप्रसङ्गादुक्तिः॥

य्वौ वा॥ धातोरवयवसंयोगः पूर्वो यस्मादी-

कारदूकारान्नास्ति तदंतस्याऽनेकस्वरस्य कारकाव्ययपूर्वस्य एकस्वरस्य च ईकारस्य ऊकारस्य च यकारवकारौ भवतः स्वरे परे। वर्षाभूपुनर्भूव्यतिरिक्तभूशब्दसुधीशब्दौ वर्जयित्वा। वाग्रहणादियं विवक्षा। सेनानीः। सेनान्यौ। सेनान्यः। हे सेनानीः। हे सेनान्यौ। हे सेनान्यः। सेनान्यम्। सेनान्यौ। सेनान्यः। सेनान्या। सेनानीभ्याम्। सेनानीभिः। सेनान्ये। सेनानीभ्याम्। सेनानीभ्यः। सेनान्यः। सेनानीभ्याम्। सेनानीभ्यः। सेनान्यः। सेनान्योः ॥ सेनान्यादीनां वामो नुड् वक्तव्यः ॥ ❀ ॥ सेनान्याम्-सेनानीनाम् ॥

य्वौ वेति। धातोरवयवैर्यः संयोगः स यस्मादीकारदूकारात्पूर्वो नास्ति तौ धातोरीकारोकारौ अन्ते यस्य एवंविधो योऽनेकस्वरः शब्दस्तस्य यावीकारोकारौ तयोर्यकारवकारौ भवत इत्यर्थः। वर्षाभूपुनर्भूभ्यामतिरिक्तोऽन्यो यो भूशब्दान्तः सुधीशब्दश्च तं वर्जयित्वा केवलभूशब्दस्यानेकस्वरत्वाभावादेवाप्राप्तेस्तदन्तप्राप्तौ प्रतिषेधः। एवंविधे नियामकापेक्षायामाह। वाग्रहणादिति। वाशब्दस्य व्यवस्थितविकल्पार्थत्वादित्यर्थः। विवक्षेत्यनेन प्रयोगानुसारतो यथेष्टं व्यवस्थाविज्ञानात्। इन्भूकाराभूभ्यामप्यन्यस्यंत्यवसेयम्। तथा गतिकारकेतरपूर्वस्यैव। नेह। शुद्धधियौ। परमधियौ। गतिसंज्ञा च गतिश्चेत्यादिना लोकतोऽवगन्तव्या। उन्न्यावित्यादावुपसर्गधात्ववयवयोः संयोगान्तत्वान्न निषेधः। "सेनानीनामहं स्कन्दः" इत्याद्यार्षप्रयोगार्थमाह। सेनान्यादीनामिति। छन्दस्येव। आदिशब्दात् गोनामित्याद्यपि ॥

**आम्ङेः** ॥ आबन्तादीबन्तान्नीशब्दाच्चोत्तरस्य ङेरामादेशो भवति । सेनान्याम् । सेनान्योः । सेनानीषु । वातप्रमीशब्दस्य भेदः । वातप्रमीः । वातप्रम्यौ । वातप्रम्यः । हे वातप्रमीः । हे वातप्रम्यौ । हे वातप्रम्यः । वातप्रमीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् । वातप्रमीभिः । वातप्रम्ये । वातप्रमीभ्याम् । वातप्रमीभ्यः। वातप्रम्यः । वातप्रमीभ्याम् । वातप्रमीभ्यः । वातप्रम्यः । वातप्रम्योः ॥ **आमि नुट्** ॥ वातप्रमीनाम् । ङौ तु सवर्णदीर्घः । वातप्रमी । वातप्रम्योः । वातप्रमीषु । एवं ग्रामणीप्रभृतयः सेनानीवत् । ऊकारान्ताश्च यवलूप्रभृतयः । ऋकारान्तः पुँल्लिङ्गः पितृशब्दः ॥

आम्ङेरिति । अत्रापः नियश्चेत्यनुवर्तते ॥

**सेरा** ॥ ऋकारान्तात्परस्य सेरा भवति स च डित् । डित्त्वाट्टेर्लोपः । पिता ॥ **अर्पञ्चसु** ॥ ऋकारोऽर्भवति पञ्चसु परेषु। स च डित्। पितरौ। पितरः । हे पितः । हे पितरौ । हे पितरः । पितरम् । पितरौ । पितॄन् । पित्रा । पितृभ्याम् । पितृभिः । पित्रे । पितृभ्याम् । पितृभ्यः । पितुः । पितृभ्याम् । पितृभ्यः । पितुः । पित्रोः । पितॄणाम् ॥ **ङौ** ॥ ऋकारस्यार् भवति ङौ परे ।

पितरि । पित्रोः।पितृषु । एवं जामातृभ्रात्रादयः। नृशब्दः । ना । नरौ । नरः । नरम् । नरौ । नॄन् । न्रा । नृभ्याम् । नृभिः । न्रे । नृभ्याम् । नृभ्यः । नुः । नृभ्याम् । नृभ्यः।नुः । न्रोः ॥ नुर्वा नामि दीर्घः॥ नृशब्दस्य नामि परे वा दीर्घो भवति । नृणाम्—नॄणाम् । नरि । न्रोः । नृषु । हे नः । हे नरौ । हे नरः । कर्तृशब्दस्य पञ्चसु विशेषः ॥

सेरा इति । अत्र यद्यपि परत्वात्पञ्चास्वित्यर् प्राप्नोति तथापि तल्लोपसम्भवान्निरवकाशत्वाच्च आ एव पञ्चसु । कर्तृणी कुले इत्यादौ परत्वान्नुमा बाधान्नाप्रसङ्गः।"नृणामेको गम्यस्त्वमसि पयसामर्णव इव। " इत्यादिप्रयोगासिद्ध्यर्थमाह । नुर्वेति । नृशब्दस्य नामि परे वा दीर्घ इत्यर्थः । नुर्वेतिसूत्रमर्थतो व्याख्यातमस्तु ॥

स्तुरार् ॥ सकारतृप्रत्ययसम्बन्धिन ऋकारस्यार्भवति पञ्चसु परेषु । कर्तृ सि इति स्थिते । यदादेशस्तद्वद्भवति ॥ सेरा ॥ डित्त्वाट्टेर्लोपः । कर्त्ता । कर्त्तारौ । कर्त्तारः। हे कर्त्तः। हे कर्त्तारौ। हे कर्त्तारः। कर्त्तारम् । कर्त्तारौ । कर्तॄन् । कर्त्रा । कर्तृभ्याम् । कर्तृभिः । कर्त्रे । कर्तृभ्याम् । कर्तृभ्यः। कर्तुः । कर्तृभ्याम् । कर्तृभ्यः। कर्तुः । कर्त्रोः । कर्तॄणाम् । कर्तरि। कर्त्रोः । कर्तृषु । एवं नप्तृहोतृप्रशास्तृप्रभृतयः। उकारान्तस्य क्रोष्टुशब्दस्य भेदः ॥ उकारान्तस्यापि क्रोष्टुशब्दस्य पञ्चस्वधिषु तृप्रत्ययान्तस्येव

रूपं वक्तव्यम् ॥ ❀ ॥ क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । शसि तृप्रत्यया-न्तवद्भावाभावात् । क्रोष्टून् । तृतीयादौ स्व-रादौ तृप्रत्ययान्तता वा वक्तव्या ॥❀॥ क्रोष्ट्रा–क्रोष्टुना । क्रोष्टुभ्याम् । क्रोष्टुभिः । क्रोष्ट्रे–क्रोष्टवे । क्रोष्टुभ्याम् । क्रोष्टुभ्यः । क्रोष्टुः–क्रोष्टोः । क्रोष्टुभ्याम् । क्रोष्टुभ्यः । क्रोष्टुः–क्रोष्टोः । क्रोष्ट्रोः–क्रोष्ट्वोः । क्रोष्टूनाम् । नुडागमे कृते हसादित्वा-त्तृज्वद्भावो नास्ति ॥

स्तुरिति । उच तृश्च स्तृ तस्यः स्तुः । आगमानुशासन-स्यानित्यत्वान्नुमभावः । लिङ्गवचनव्यत्ययौ वा । ऋतो ङ उरि-त्यत ऋत इत्यनुवृत्तेस्तस्य च तपरत्वात्तावन्मात्रग्रहणे तिस्रः । चतस्रः । प्रियातिस्रौ प्रियचतस्रावित्यादौ । ऋकारस्य ऋकारातिदे-शान्नार् । ततश्च सकारसम्बन्धिस्वसृशब्दस्य ऋकारः । उकारा-न्तस्यापीति पञ्चस्वित्यस्य शेरप्युपलक्षणत्वात्प्रियक्रोष्ट्रृणामित्यादि । शसि तृप्रत्ययवद्भावाभावादतिप्रत्ययवद्भावस्याभावस्तस्मात् पञ्चसु तृप्रत्ययवद्भावो विधीयते । तृतीयादौ स्वरादौ च वेत्यवशिष्टे शसि तदभाव इत्यर्थः ॥

कृताकृतप्रसङ्गी यो विधिः स नित्यः ॥❀॥ नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् । क्रोष्ट-रि–क्रोष्टौ । क्रोष्ट्रोः–क्रोष्ट्वोः । क्रोष्टुषु । ऋकारान्ता ऌकारान्ता एकारान्ताश्चाप्रसिद्धाः । ऐकारान्तः पुंल्लिङ्गः सुरैशब्दः ॥

ननु क्रोष्टूनामित्यत्र कथं पक्षे तृप्रत्ययान्तत्वाभाव इत्यत आह। कृताकृतप्रसङ्गीति । यः कृतेऽपि प्रसज्यते अकृतेऽपि प्रसज्यते स विधिर्नित्य इत्यर्थः । नित्यानित्ययोर्मध्ये नित्यविधिर्बलवानिति स एव " यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते " इति हसादित्वम् । ऋकारान्ता इत्यादि । यद्यपि " ऋर्देनाविति केऽप्याहुर्देवयोनिप्रसूश्च लृः । ऐर्विष्णुः " इत्यादौ ऋकारादयो दृश्यन्ते तथापि तदन्ता अप्रसिद्धा एव । एतेऽपि प्रचुरप्रयोगाभावान्नोक्ताः[1] ॥

**रै स्भि॥** रैशब्दस्याकारादेशो भवति सकारभकारादौ विभक्तौ परतः । सुराः। स्वरादौ सर्वत्रायादेशः । सुरायौ । सुरायः । हे सुराः । हे सुरायौ । हे सुरायः । सुरायम् । सुरायौ।सुरायः । सुराया।सुराभ्याम्।सुराभिरित्यादि। ओकारान्तः पुँल्लिङ्गो गोशब्दः ॥ **ओरौ ॥** ओकारस्यौकारादेशो भवति पञ्चसु परेषु।गौः।गावौ। गावः । हे गौः । हे गावौ । हे गावः ॥

रै इति । स् च भ् च स्भ् तस्मिन् स्भि रै इति साङ्केतिकषष्ठ्यन्तत्वात्षष्ठीनिर्दिष्टस्येत्यन्तस्य[2] । अथवा । राय ऐ रै इति षष्ठीतत्पुरुषे आयादेशे यलोपे च सन्धिरार्षः । रैशब्दस्यैकार आ भवतीत्यर्थः ॥

**आऽम्शसि ॥** ओकारस्यात्वं भवति अमि शसि च परे । गाम् । गावौ । गाः । गवा । गोभ्याम् । गोभिः । गवे । गोभ्याम् । गोभ्यः । ङ-

---

१ नैकमुदाहरणं योगारंभं प्रयुञ्जत इति भाष्यप्रामाण्यादिति भावः ॥

२ लुप्तषष्ठ्यन्तत्वादिति वक्तुं शक्यम् ॥

सीत्यकारलोपः । गोः । गोभ्याम् । गोभ्यः । गोः । गवोः । गवाम् । गवि । गवोः । गोषु । एवं सुद्योशब्दः । ग्लौशब्दस्य हसादावविशेषः स्वरादावावादेशः । ग्लौः । ग्लावौ । ग्लावः । ग्लावम् । ग्लावौ । ग्लावः । ग्लावा । ग्लौभ्यामित्यादि ॥

इति स्वरान्ताः पुँल्लिङ्गाः ॥

आऽम्शसि इति । आ अम् शसि समानपदस्य कृताकारवर्ज्जेपरत्वव्याख्यानाद्गा इत्यत्र नत्वाप्रसङ्गः ॥

इति सारस्वतप्रसादे स्वरान्ताः पुँल्लिङ्गाः ।

अथ स्वरान्ताः स्त्रीलिङ्गाः प्रदर्श्यन्ते ।

तत्राबन्तो गङ्गाशब्दः ॥ **आबतः स्त्रियाम्** ॥ अकारान्तान्नाम्नः स्त्रियां वर्तमानादाप्प्रत्ययो भवति॥ **आपः** ॥ आबन्तात्परस्य सेर्लोपो भवति। गङ्गा॥ **औरी** ॥ आबन्तात्पर औ ईकारमापद्यते । अइ ए । गङ्गे । गङ्गाः ॥ **धिरिः** ॥ आबन्तात्परो धिरिर्भवति । हे गङ्गे ॥ **अम्बादीनां धौ ह्रस्वः** ॥ अम्बादीनां धौ परे ह्रस्वो भवति । हे अम्ब । हे अक्क ।हे अल्ल ॥ **असंयुक्तानां डलकवतीनां प्रतिषेधो वाच्यः** ॥ ❀ ॥ हे अम्बाडे । हे अम्बाले । हे अम्बिके । इत्यादौ ह्रस्वो न भवति । गङ्गाम्। गङ्गे। गङ्गाः॥ **टौसोरे**॥

आबन्तस्य टौसोः परयोरेत्वं भवति । आयादेशः । गङ्गया । गङ्गाभ्याम् । गङ्गाभिः ॥

आप इति । आरूपः आप् आपू तस्मात् । तदन्तादित्यर्थः । ततश्च खट्वामतिक्रान्तोऽतिखट्वः अतिखट्वेनेत्यादावेकदेशविकृतस्यानन्यत्वादाबन्तत्वेऽपि तत्कार्याभावः अम्बादीनामित्यत्रादिशब्देन मात्रार्थकत्वादक्काल्लादि च संग्रहः । अम्बिकादीनां तु अम्बादिभ्यो भिन्नत्वात्तदप्रसङ्गः ॥

ङितां यट् ॥ आबन्तात्परेषां ङे ङसि ङस् ङि इत्येतेषां यडागमो भवति । टकारः स्थाननियमार्थः । गङ्गायै । गङ्गाभ्याम् । गङ्गाभ्यः । गङ्गायाः । गङ्गाभ्याम् । गङ्गाभ्यः । गङ्गायाः । गङ्गयोः ॥ आबन्तादीबन्तादामो नुड् वक्तव्यः ॥ ❀ ॥ गङ्गानाम् ॥ आम्ङेः ॥ गङ्गायाम् । गङ्गयोः । गङ्गासु । एवं श्रद्धामेधाशालामालामहिलादोलाप्रभृतयः । सर्वादीनां तु ङित्सु विशेषः ॥ यटोऽच्च ॥ आबन्तात्सर्वादेः परस्य यटः सुडागमो भवति । पूर्वस्य चापोऽकारो भवति । सर्वस्यै । सर्वाभ्याम् । सर्वाभ्यः । सर्वस्याः । सर्वाभ्याम् । सर्वाभ्यः । सर्वस्याः । सर्वयोः । सर्वासाम् । सर्वस्याम् । सर्वयोः । सर्वासु । आकारान्तो जराशब्दः ॥ जराया: स्वरादौ जरस् वा वक्तव्यः ॥ ❀ ॥

जरा । जरसौ-जरे । जरसः-जराः । जरसम्-जराम् । जरसौ-जरे । जरसः-जराः । जरसा-जरया । जराभ्याम् । जराभिः । जरसे-जरायै । जराभ्याम् । जराभ्यः । जरसः-जरायाः । जराभ्याम् । जराभ्यः । जरसः-जरायाः । जरसोः-जरयोः।जरसाम्-जराणाम् । जरसि-जरायाम् । जरसोः-जरयोः । जरासु । हे जरे । हे जरसौ-हे जरे । हे जरसः-हे जराः । इकारान्तः स्त्रीलिङ्गो बुद्धिशब्दः । तस्य च प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया। बुद्धिः। बुद्धी।बुद्धयः । बुद्धिम् । बुद्धी । बुद्धीः । स्त्रीत्वाच्छसो नत्वाभावः । बुद्धया। बुद्धिभ्याम्। बुद्धिभिः॥ **इदुद्भ्याम्॥** स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां वचनानां वा अडागमो भवति। बुद्धयै-बुद्धये। बुद्धिभ्याम् । बुद्धिभ्यः । बुद्धयाः-बुद्धेः । बुद्धिभ्याम् । बुद्धिभ्यः । बुद्धयाः-बुद्धेः । बुद्धयोः । बुद्धीनाम् ॥ **स्त्रियां य्वोः** ॥ इश्च उश्च यू तस्मात् । इवर्णान्तादुवर्णान्ताच्च परस्य ङेरामादेशो भवति। बुद्धयाम् । अडागमाभावे आमोऽप्यभावः । बुद्धौ । बुद्धयोः । बुद्धिषु । एवं मतिभूतिधृतिरुचिकृतिसिद्धिशान्तिभ्रान्ति-आलिशक्तिप्रभृतयः । एवं धेनुरज्जुप्रभृतयः

स्त्रीलिङ्गाः । धेनुः । धेनू । धेनवः । धेनुम् । धेनू । धेनूः । धेन्वा । धेनुभ्याम् । धेनुभिः । धेन्वै-धेनवे । धेनुभ्याम् । धेनुभ्यः । धेन्वाः-धेनोः । धेनुभ्याम् । धेनुभ्यः । धेन्वाः-धेनोः । धेन्वोः । धेनूनाम् । धेन्वाम्-धेनौ । धेन्वोः । धेनुषु । ईकारान्तः स्त्रीलिङ्गो नदीशब्दः ॥

ङितामिति । ङ् इत् येषां ते ङितस्तेषामित्यभिप्रेत्याह । ङेङसिङस्ङीत्यादिदेशनियमार्थः । देशस्य स्थानस्य नियमार्थ इत्यर्थः । जराया इत्यत्र तदन्तविधेरिष्टत्वादेकदेशविकारेऽपि निर्जराजरशब्दयोः पुन्नपुंसकयोरपि जरसवक्तव्यत्वाद्दाशब्दाद्वा । हे जरे इत्यत्र जरसभावः । इदुद्भ्याम् । युव इत्यतो वानुवृत्तेर्नित्यस्त्रीलिङ्गानामेव नानियतलिङ्गानां शुचिमृदुपटुप्रभृतीनां शाकटायनास्त्वेषामपीच्छन्ति । स्त्रियां य्वोरिति विगृह्य व्याचष्टे । इश्च उश्चेति नुमभावश्चानित्यत्वात् । व्यत्ययो वा अत्रापि नित्यस्त्रीलिङ्गयोरित्येव अडागमाभावे अमोऽप्यभावे वक्तव्य इत्यर्थः ॥

**हसेपः सेर्लोपः** ॥ हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति । नदी । नद्यौ । नद्यः ॥ **धौ ह्रस्वः** ॥ इवर्णोवर्णयोरधातोः स्त्रियां धौ परे ह्रस्वो भवति । हे नदि । हे नद्यौ । हे नद्यः । नदीम् । नद्यौ । नदीः । नद्या । नदीभ्याम् । नदीभिः ॥

हसेप इति । हसश्च ईप् च हसेप् तस्मात् लघ्वक्षरत्वात्पूर्वत्वं सौत्रं वा । अत्रापि ईरूपः ईप् इति ईप्विवक्षया । निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिरित्यादौ सिलोपाभावः । यद्यपि हसान्ता-

त्संयोगान्तलोपेनापि सिद्धिस्तथापि 'कक् लौल्ये' इत्यादीनां ककारान्तानां क्विपि स्कोराद्योश्चेति विशेषस्य कलोपविधेः प्रसङ्गेनानिष्टं स्यात् । धौ इति । वेयुव इत्यतो वानुकर्षणान्नित्यस्त्रीलिङ्गानां स्त्रीवर्जमनियुवन्तानामिति[1] व्यवस्थाऽवसेया । अधातोरिति तु अनियुवन्तोपलक्षणार्थम् । अन्यथा प्रकृष्टा धीः प्रधीरिति विग्रहे नित्यस्त्रीत्वे प्रधीशब्देकारस्य धातोर्ह्रस्वता[2] न स्यात् । इयुवन्तत्वाच्च । हे श्रीः हे भ्रूरित्यादौ न ह्रस्वत्वम् । "विमानना सुभ्रु कुतः पितुर्गृहे" इत्यादिप्रयोगाद्धौ सुभ्रूः स्त्रीवदिति । ह्रस्व इति केचित् । ननु ह्रस्वत्वे इकारान्तत्वाद्धाविति स्यादिति चेत्सत्यम् । वेयुव इत्यतो वानुवृत्तेर्व्यवस्थाया न ह्रस्वविधानसामर्थ्याच्च । अन्यथा ए औ इत्येव कुर्यात् । स्त्रियां य्वोरित्यतो ह्रस्वदीर्घसाधारणानुवृत्तेरिवर्णोवर्णयोरित्युक्तम् ॥

**ङितामट् स्त्रियाम्** ॥ स्त्रीलिङ्गे वर्तमानादीकारान्तादूकारान्ताच्च परेषां ङितां वचनानामडागमो भवति । नद्यै । नदीभ्याम् । नदीभ्यः । नद्याः । नदीभ्याम् । नदीभ्यः । नद्याः । नद्योः । नदीनाम् । नद्याम् । नद्योः । नदीषु । एवं गौरीसरस्वतीब्राह्मणीकुमारीकिशोरीकलभीप्रभृतयः । लक्ष्मीशब्दस्येबन्तत्वाभावात्सेर्लोपो नास्ति । लक्ष्मीः । लक्ष्म्यौ । लक्ष्म्यः । शेषं नदीवत् । हे लक्ष्मि । स्त्रीशब्दस्य ईबन्तत्वात्सेर्लोपोऽस्ति । स्त्री ॥

---

१ 'इयू, उवू' एतदन्तभिन्नानाम् ॥

२ धात्ववयवभूतस्य प्रधीशब्दसम्बन्धीकारस्य ॥

ङितामिति । यद्यपि स्त्रियां य्वोरित्यतो ह्रस्वदीर्घसाधारणानुवृत्तिस्तथापीदुद्भ्यामित्यनेन ह्रस्वाभ्यां विकल्पेन विधानात्परिशेषादिकारान्तादकारान्ताच्चेत्युक्तम् । अत्रापि नित्यस्त्रीलिङ्गानामित्यर्थावसायात्सुनद्ये सुभूम्ये इत्यादावभावः । लक्ष्मीशब्दस्येति । लक्षेरी मुडेतीप्रत्ययान्तत्वादित्यर्थः । तदुक्तम् । " अवीलक्ष्मीतरीतंत्रीह्रीधीश्रीणामुणादितः । सप्तानामपि शब्दानां सिलोपो न कदाचन ॥" इति स्त्रीशब्दस्येति । स्त्यायतेः स्त्रीत्वे ड्रट् इति ड्रटि टित्वादीबन्तत्वादित्यर्थः ॥

**स्त्रीभ्रुवोः** ॥ स्त्रीशब्दस्य भ्रूशब्दस्य च इयुवौ भवतः स्वरे परे । स्त्रियौ । स्त्रियः । हे स्त्रि । हे स्त्रियौ । हे स्त्रियः ॥ **वाम्शसि** ॥ स्त्रीशब्दस्य अमि शसि च परे वा इयादेशो भवति। स्त्रियम्-स्त्रीम् । स्त्रियौ । स्त्रीः-स्त्रियः । स्त्रिया । स्त्रीभ्याम् । स्त्रीभिः । स्त्रीषु । शेषं नदीवत् । श्रीः । श्रियौ । श्रियः । श्रियम् । श्रियौ । श्रियः । श्रिया । श्रीभ्याम् । श्रीभिः ॥

स्त्रीभ्रुवोरिति । भ्रमु अनवस्थाने अस्मात् प्रत्यये धातोरुवर्णाभावादुवावप्राप्तावारम्भः वाम्शसीत्यत्र यद्यपि स्त्रीभ्रुवोरित्यत एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति भ्रूशब्दस्याप्यनुवृत्तिस्तथापि वाशब्दस्य व्यवस्थायामिति नास्य विकल्पः । वेयुव इत्यत्र वाशब्दस्य व्यवस्थितार्थत्वेन स्त्रीशब्दस्येयन्तत्वेऽपि अटो विकल्पाभावान्नित्यमटि शेषं नदीवदित्युक्तम् ॥

---

१ अवसायाद्विनिश्चयात् ॥ २ सेलोपो न भवतीत्यर्थः॥३ स्त्यै ष्टयै शब्दसंघातयोरित्यर्थकात्स्त्यैधातोरित्यर्थः । अत एव स्त्यायेते संघीभवतः ( शुक्रशोणिते ) यस्यां सा स्त्रीति स्त्रीशब्दव्युत्पत्तिः ॥ ४ सेलोपोऽस्तीत्यर्थः ॥ ५ एकसूत्रोक्तानामित्यर्थ. ।

वेयुंवः ॥इयुवन्तात्स्त्रियां वर्तमानान्ङितां वचनानां वाऽडागमो भवति । स्त्रियास्तु नित्यम् । श्रियै-श्रिये।श्रीभ्याम्।श्रीभ्यः। श्रियः-श्रियाः। श्रीभ्याम् । श्रीभ्यः । श्रियः-श्रियाः । श्रियोः ।

श्र्यादीनां वामो नुड्वक्तव्यः ॥ श्रियाम्-श्रीणाम् । ङौ परेऽडागमाभावे आमोऽप्यभावः। श्रियाम्-श्रियि । श्रियोः । श्रीषु । हे श्रीः । एवं ह्रीधीप्रभृतयोऽप्यनीबन्ताः । एवं भूशब्दो भ्रूशब्दवत् । वधूजंब्वादीनां नदीशब्दवत् । वधूः । वध्वौ । वध्वः । वधूम् । वध्वौ । वधूः । जम्बूः। जम्ब्वौ । जम्ब्वः। हे जम्बु । हे जम्ब्वौ । हे जम्ब्वः । ऋकारान्तो मातृशब्दः । माता । मातरौ । मातरः । मातरम् । मातरौ । मातॄः । शसीति दीर्घत्वम् । शेषं पितृवत् । रैशब्दः सुरैशब्दवत् । नौशब्दो ग्लौशब्दवत् । गोशब्दस्तु पूर्ववत्[2] ॥ इति स्त्रीलिङ्गाः ॥

वेयुव इति । इय् च उव् च इयुव् तस्मात् । येन विधिस्तदन्तस्येति इयुवन्तादित्युक्तम् । अत्रापि नित्यस्त्रीलिङ्गनियमात्सुश्रियै नद्यै इत्यादावट्प्रसङ्गः । श्र्यादीनामित्यत्र श्रीशब्दस्य प्रकार[3]वाचित्वान्नित्यस्त्रीलिङ्गानां स्त्रीवर्ज्जमियुवन्तानामुपादानाद्धीनां भ्रूणामित्यादिसिद्धिः । कुमारीमात्मन इच्छति कुमारीयति कुमा-

---

१ 'ङितामट् स्त्रियाम्' इत्यतोऽट् इत्यनुवर्तते ॥ २ पुँल्लिङ्गगोशब्दवदित्यर्थः ॥
३ सादृश्यवाचित्वात् । श्रीशब्दसदृशानित्यस्त्रीलिङ्गानामित्यर्थोपलम्भादित्यर्थः ॥

रीयतीति कुमारीत्यादौ स्त्रीप्रत्ययान्तप्रकृतिकान्नामधातोः क्विपि प्रकृतिवदिति वचनात्कुमार्यै ब्राह्मणायेत्याद्यूह्यम् । मातृशब्दस्य ऋकारान्तत्वेन त्रण ईबितीप्प्राप्तावपि स्वस्रादिपाठान्न । ते च " स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ " इति । विचारविशेषश्च तत्रैव[1] वक्ष्यते ॥

इति सारस्वतप्रसादे स्वरान्ताः स्त्रीलिङ्गाः ।

## अथ स्वरान्ता नपुंसकलिङ्गाः प्रदर्श्यन्ते ।

**अकारांतो नपुंसकः कुलशब्दः । तस्य प्रथमाद्वितीयैकवचने ॥ अतोऽम् ॥ अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोरम् भवति अधौ । अमोऽम्ग्रहणं लुग्व्यावृत्त्यर्थम् । अम्शसोरस्य ॥ कुलम् ॥ ईमौ ॥ नपुंसकलिङ्गात्पर औ ईकारमापद्यते । कुले ॥**

अतोमिति । तपरकरणं सुखमुखोच्चारणार्थम् । अकारान्तस्य ह्रस्वत्वेन व्यावर्त्यत्वाभावात् । " येन नाप्राप्ते[2] यो विधिरारभ्यते स तस्य बाधकः " इति लुको बाध इत्यर्थः । अनेकाक्षरत्वेन गुरुत्वात्सर्वस्यैवामः स्यान्नान्त्यमकारमात्रस्य । नन्वत्र म् एव विधीयताम् । सेरन्त्यस्याभावादाद्यन्तन्यायेन[3] सर्वस्य स्यात् । अमोऽप्यन्तस्यैव भविष्यति । म्विधिसामर्थ्याच्च लुगभावोऽपि भविष्यतीति चेत्सत्यम् । अमो मस्य म्विधौ कुलं यातीत्यादावनुस्वारोऽपि न स्यात् । म्विधिसामर्थ्यात् । अजरसं कुलमित्यादिप्रयोगासिद्धिप्रसङ्गाच्च । ईमौ इति । मधुनी इत्यादौ दीर्घश्रवणार्थं दीर्घविधिः ॥

**जश्शसोः शिः ॥ नपुंसकलिङ्गात्परयोर्ज-**

---

१ स्त्रीप्रत्ययप्रकरण एवेत्यर्थः ॥ २ यत्कर्तृकावश्यकप्राप्तावित्यर्थः ॥ ३ व्यपदेशिवद्भावेनेत्यर्थः ॥

इशसोः शिर्भवति । शकारः सर्वादेशार्थः ॥ गुरुः शिच्च सर्वस्य वक्तव्यः॥*॥ नुमयमः ॥ नपुंसकस्य नुमागमो भवति शौ परे। यमप्रत्याहारान्तस्य न भवति ॥ मिदन्त्यात्स्वरात्परो वक्तव्यः ॥*॥ नोपधायाः॥ नान्तस्योपधाया दीर्घो भवति शौ परे धिवर्जितेषु पञ्चसु । नामि च न त्वीति । कुलानि । हे कुल । हे कुले । हे कुलानि । पुनरपि कुलम् । कुले । कुलानि । शेषं देववत् । एवं मूलफलपत्रपुष्पकुटुम्बादयः ॥

जश्शसोरिति । जसा साहचर्यात् सानुबन्धग्रहणे न निरनुबन्धस्येति परिभाषया वा शसपि द्वितीयाबहुवचनमेवेत्यतः कुण्डशो ददातीत्यादौ शस्प्रत्ययस्य तद्धितस्य न । जश्शसोरिति षष्ठीनिर्देशादन्त्यस्य प्राप्तावपवादमाह । गुरुरित्यादि । गुरुरनेकवर्णादेशः । ननु गुरुशब्दस्यानेकाक्षरादेशोपलक्षकत्वेन शेरप्यनेकाक्षरत्वादत्र सर्वादेशत्वसिद्धौ पृथगुपादानमपार्थकमिति चेत्सत्यम् । श्त्वन्यादेरित्यत्र शित्करणम् " नानुबन्धकृतमनेकाल्त्वम् " इत्यनुबन्धनिमित्तानेकवर्णत्वाभावात् । नोपधायाः । नस्य नान्तस्य उपधो नोपधा तस्याः । नेति साङ्केतिकषष्ठ्यन्तम् । पृथगेव वा । अत्र यद्यपि पञ्चस्विति सामान्येनोक्तं तथापि वादीपोः शतुरित्यतो वानुवर्तनात् स्त्रीपुंसयोः पञ्चसु नपुंसके वा साविति विवेकः । अधावित्यपि स्त्रीपुंसयोरेव क्लीबे प्राप्त्यभावात् ॥

श्त्वन्यादेः ॥ अन्यादेर्गणात् परयोः स्यमोः श्तुर्भवति । शकारः शित्कार्यार्थः । उकार उच्चा-

रणार्थः ॥ **वावसाने** ॥ अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा । अन्यत्—अन्यद् । अन्ये । अन्यानि । पुनरपि । अन्यत्—अन्यद् । अन्ये । अन्यानि । अन्यतरत्—अन्यतरद् । अन्यतरे । अन्यतराणि । इतरत्—इतरद् । इतरे । इतराणि । कतरत्—कतरद् । कतरे । कतराणि । कतमत्—कतमद् । कतमे । कतमानि । शेषं सर्वशब्दवत् । एते चान्यादयः। इकारान्तोऽस्थि-शब्दः ॥ **नपुंसकात्स्यमोर्लुक्** ॥ नपुंसक-लिङ्गात्परयोः स्यमोर्लुग् भवति । अस्थि ॥ **य्वॄणाम्** ॥ इश्च उश्च आ च य्वॄ तेषां य्वॄणाम् इकारोकारान्तानाम्॥ **नपुंसकेऽधौ वा गुणो वक्तव्यः** ॥❀॥ हे अस्थि । हे अस्थिनी । हे अस्थीनि । उक्तं हि । "सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् । माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः॥" इति ॥

इत्वन्यादेरिति । अधावित्यस्यानुवृत्तेर्धेरपि अमोऽपवादः । समानाद्धेर्लोपोऽधातोरित्यत्र कुप्वोः ≍ क ≍ पौ वेत्यतो वानुवृत्तेर्व्यवस्थामाह । अन्यदिति । यस्त्वन्यदित्यत्रामूलुगभाव इवात्रापि इतुविधानसामर्थ्यादेव लोपाभाव इति । तदसत् । येन नाप्राप्तिन्यायेनाम्लुकोः प्राप्तयोः इतुविधेस्तदपवादत्वात् । विधानस्य च

स्यमोरेव सार्थकत्वात् । आदिशब्देन डतमान्ताः पञ्चोपादीयन्ते । एकतरस्य च एकाच्च प्राचामिति डतरप्रत्ययान्तत्वेऽपि अनेकत-रादित्युत्तरसूत्रे प्रतिषेधान्नानपुंसके धौ वा गुण इत्यनिर्दिष्टस्थानि-त्वेऽपि गुणसंज्ञया विधीयमाननामिन एव स्थाने भवन्तीति निय-माच्चयो नामिनः स्थानिनो ज्ञेयाः । ऋजवस्तु[1] स्तॄणां नपुंसके इत्यादि पठन्ति । पूर्वाचार्यसम्मतिमाह । उक्तं हीति । मध्यन्दिनस्यापत्यं माध्यन्दिनिः आचार्यः । उशनसः उशनश्शब्दस्य त्रिरूपं त्रयाणां रूपाणां समाहारस्त्रिरूपं त्रीणि रूपाणीत्यर्थः । वष्टि कामयते । तथा इगन्ते इउऋऌवर्णान्ते नपुंसके गुणं च वष्टि । तद्गौरवार्थं[2] व्याघ्रपादगोत्राणां मध्ये वरिष्ठः श्रेष्ठ इत्यर्थः ॥

**नामिनः स्वरे॥ नाम्यन्तस्य नपुंसकलिङ्गस्य नुमागमो भवति स्वरे परे ॥ईमौ॥ अस्थिनी॥**

**अच्चास्थ्नां शसादौ ॥ अस्थ्यादीनां नुमा-गमो भवति इकारस्य चाकारो भवति शसादौ स्वरे परे ॥**

नामिन इति । विभक्त्यधिकाराद्विभक्तिस्वर एव न दध्द्याना-यादौ । अच्चास्थ्नाम् । शस आदिर्येषामित्यतद्गुणसंविज्ञानबहुव्री-ह्याश्रयणात् शसं विहाय टादावित्यर्थः । तदुपादानं च वसोर्व उरित्यादावनुवृत्त्यर्थम् । यत्तु प्रियास्थ्नः शुनः पश्येत्यादौ पुंसि शसि परेऽपि प्राप्त्यर्थं तदिति । तदयुक्तम् । पाणिन्यादिभिर्विरो-धात् । अस्थ्नामिति बहुवचनेन अस्थिदधिसक्थिअक्षिशब्दा गृह्यन्ते । अत्र तदन्तविधेरपीष्टत्वात्प्रियदध्ना ब्राह्मणेनेत्याद्यपि । नामिनः स्वर इति नुमि सिद्धेऽपि पुनर्नुमविधानं टा नास्त्रियामिति नाभावार्थमिति कश्चित्तदयुक्तम् । विशेषत्वात्[3]परत्वाच्च तदभावात् ।

---

१ सरलाः शाब्दिकाः ॥ २ माध्यन्दिन्याचार्यस्य वचने प्रामाण्यज्ञापनाय ॥
३ अल्पप्रदेशवृत्तित्वात् अपवादत्वादित्यर्थ इति भावः ॥

नाप्यामि नुडभावार्थम् । नुमः परत्वादेव प्राप्तेः । अत एव नुमन्तस्येति पाठः । वस्तुतः प्रियदध्ना ब्राह्मणेनेत्यादावनपुंसकेऽपि नुम्विध्यर्थं नुमविधेरप्यावश्यकत्वात् ॥

**अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ ॥**

नान्तस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे । मकारवकारान्तसंयोगादुत्तरस्य न भवति । अस्थ्ना । अस्थिभ्याम् । अस्थिभिः । अस्थ्ने । अस्थिभ्याम् । अस्थिभ्यः । अस्थ्नः । अस्थिभ्याम् । अस्थिभ्यः । अस्थ्नः । अस्थ्नोः । अस्थ्नाम् ॥

अल्लोप इति । योगो युक्तः येन विधिस्तदन्तस्येति मकारवकारान्तयुक्तसंयोगस्तस्मादुत्तरस्य न भवतीत्यर्थः । अमानोनाः प्रतिषेध इति अकारः प्रतिषेधार्थः । अत्र शसादाविति तद्गुणसंविज्ञानबहुव्रीहेर्गङ्ग इत्यादिसिद्धिः । नन्वेवं कुलशब्दात् शसः शौ परे नुमि अल्लोपः स्यादिति चेत्सत्यम् । पूर्वविप्रतिषेधेन नोपधाया इति दीर्घविधौ सति अतोऽभावाल्लोपाभावः। वेङ्च्योरित्यतो वानुकर्षणान्नपुंसके टादौ परेऽन्यत्र शसादाविति वा व्यवस्थावसेया। नुमन्तस्यामीत्यस्य वक्तव्यत्वेन प्रयोगानुसारित्वादस्थ्नामिति ज्ञापकाच्चामि विशेषत्वेन दीर्घप्रसङ्गः ॥

**वेङ्च्योः ॥** ईङ्च्योः परयोर्वा अकारस्य लोपो भवति । अस्थ्नि—अस्थनि । एवं दधिसक्थिअक्षिशब्दाः । दध्ना । दधिभ्याम् । दधिभिः । सक्थि । सक्थिनी । सक्थीनि । सक्थ्ना । सक्थिभ्याम् । सक्थिभिः।अक्ष्णा । अक्षिभ्याम् ।

अक्षिभिः । इति पूर्ववत्प्रक्रिया ॥ **नपुंसकस्य ह्रस्वः** ॥ नपुंसकस्य ह्रस्वो भवति ॥ **नपुंसकात्स्यमोर्लुक्** ॥ ग्रामणि ॥ **नामिनः स्वरे । ईमौ** ॥ ग्रामणिनी । ग्रामणीनि ॥ **नामिनः स्वरे** ॥ नोपधाया इति दीर्घः ॥

वेङ्योरिति।ईश्च ङिश्च ईङी तयोः अम्वयुक्तादिति अत्राप्यनुवर्तनीयम् । अत एव वज्वनीत्यादावप्रसङ्गः । नपुंसकस्य षष्ठीनिर्दिष्टत्वाद्ध्रस्वादेशोऽन्त्यस्यैव न सुवाक् कुलमित्यादौ ॥

**टादावुक्तपुंस्कं पुंवद्वा** ॥ उक्तपुंस्कं नाम्यन्तं नपुंसकलिङ्गं टादौ स्वरे परे पुंवद्वा भवति ॥ **नामिनः स्वरे** ॥ ग्रामणिना–ग्रामण्या । ग्रामणिभ्याम् । ग्रामणिभिः । ग्रामण्ये–ग्रामणिने । ग्रामणिभ्याम् । ग्रामणिभ्यः । ग्रामण्यः–ग्रामणिनः । ग्रामणिभ्याम् । ग्रामणिभ्यः । ग्रामण्यः–ग्रामणिनः । ग्रामण्योः–ग्रामणिनोः।ग्रामण्याम् ॥ **नुमन्तस्यामि दीर्घः । नामिनः स्वरे** ॥ ग्रामणीनाम् ॥ **आम्ङेः** ॥ ग्रामण्याम्–ग्रामणिनि। ग्रामण्योः–ग्रामणिनोः।ग्रामणिषु । हे ग्रामणि। हे ग्रामणिनी । हे ग्रामणीनि ॥ **अतोऽम्** ॥ सोमपम् । सोमपे । सोमपानि । पुनरप्येवम् । सोमपेन। सोमपाभ्याम् । सोमपैः । सोमपाय । सोमपा-

भ्याम् । सोमपेभ्यः । इति पूर्ववत् । उकारान्तो मधुशब्दः ॥ नपुंसकात्स्यमोर्लुक् ॥ मधु ॥ नामिनः स्वरे ॥ इति नुमागमः । मधुनी ॥ जश्शसोः शिः। नोपधायाः ॥इति दीर्घः । मधूनि पुनरपि मधु । मधुनी । मधूनि ॥ नामिनः स्वरे ॥ मधुना।मधुभ्याम्।मधुभिः । ऋकारान्तः कर्तृशब्दः॥ नपुंसकात्स्यमोर्लुक् ॥ कर्तृ २ ॥ नामिनः स्वरे । ईमौ । षुनौ णोऽनन्ते ॥ कर्तृणी २। कर्तॄणि २ ॥ ऋरम्॥ कर्त्रा–कर्तृणा । कर्तृभ्याम् । कर्तृभिः । कर्त्रे–कर्तृणे । कर्तृभ्याम् । कर्तृभ्यः ॥ ऋतो ङ उः॥ स च ङित् ॥ ङिति टेः ॥ कर्तुः–कर्तृणः । कर्तृभ्याम् । कर्तृभ्यः । कर्तुः–कर्तृणः । कर्त्रोः– कर्तृणोः । कर्तॄणाम् । कर्तरि–कर्तृणि । कर्त्रोः– कर्तृणोः । कर्तृषु । हे कर्तृ । हे कर्तृणी । हे कर्तॄणि। ऐकारान्त अतिरैशब्दः । रायमतिक्रान्तमतिरि कुलम् ।नावमतिक्रान्तमतिनु जलम् । उकारान्त उपगुशब्दः । उपगता गावो यस्येति तदुपगु ॥ इति स्वरान्ता नपुंसकलिङ्गाः ॥

टादाविति। एकप्रवृत्तिनिमित्तत्वेनोक्तः पुमान्येन तदुक्तपुंस्कं अतो भिन्नप्रवृत्तिनिमित्तत्वेन उक्तावपि पील्वादीनां न पुंवद्भावः । तदुक्तम् । " पीलुर्वृक्षः फले पीलु पीलुने न तु पीलवे । वृक्षे नि-

मित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ॥" इति । अत्र वृक्षे पीलुशब्द-प्रवृत्तिनिमित्तं पीलुत्वजातिः । फले तु पीलुत्वम् । जात्यवच्छिन्न-पीलुजन्यत्वमिति । उक्तं च । "एक एव हि यः शब्दस्त्रिषु लिङ्गेषु वर्तते । एकमेवार्थमाख्याति उक्तपुंस्कं तदुच्यते ॥" इति पुंवद्भावाभावे पूर्वविप्रतिषेधेन य्वौ वेत्यस्य बाधान्नुमेव । कर्तृण इत्यादौ च परत्वादेव ऋतो ङ उरित्यादेर्बाध ऐकारान्तादीनां सुरैप्रभृतीनां ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ वक्तव्याविति। सुरि । सुरिणी । सुद्यु । सुद्युनी । सुनु । सुनुनी । तृतीयादौ च वा पुंवत् । सुरिणा-सुराया । सुद्युना-सुद्यवा । सुनुना-सुनवा इत्यादयो ज्ञेयाः ॥

इति सारस्वतप्रसादे स्वरान्ता नपुंसकलिङ्गाः ।

## अथ हसान्ताः पुँल्लिङ्गाः प्रदर्श्यन्ते ।

**तत्र हकारान्तः पुँल्लिङ्गोऽनडुह्शब्दः । नामसंज्ञायां स्यादयः ॥ पञ्चस्वनडुह आमागमो वक्तव्यः ॥ ❀ ॥**

पञ्चस्वनडुह इति । अनडुहश्चेति सूत्रेणेत्यर्थः।सूत्रे च इतोऽत्पञ्चस्वित्यतः पञ्चसु चतुराम्शौ चेत्यनन्तरतः आम्शौ चेति पदान्यनुवर्त्य अनडुह्शब्दस्यामागमो भवति पुंसि पञ्चसु नपुंसके शौ च । चकारात्स्त्रियां वा । ततश्च अनुडुही अनड्वाही । तथा स्वनडुही स्वनड्वाही । नन्वत्र नुमि हकारस्य झस्त्वाभावान्नश्चापदान्ते झसे इत्यस्याप्राप्तेः कथमनुस्वार इति चेत्सत्यम् । नश्चापदान्ते इति योगविभागात् स्यात् ॥

**सावनडुहः ॥ अनडुह्शब्दस्य सौ परे नुमागमो भवति॥ संयोगान्तस्य लोपः ॥संयोगान्तस्य लोपो भवति रसे पदान्ते च । रेफादुत्तरस्य सकारस्यैव लोपो नान्यस्य ॥ हसेपः**

सेर्लोपः । उ वम् ॥ इति वत्वम् । लोपविधि-सामर्थ्यान्न दत्वम् । अनड्वान् । अनड्वाहौ । अनड्वाहः । अनड्वाहम् । अनड्वाहौ । अनडुहः । अनडुहा ॥

सौ इति। अत्र च नुमामोर्विरोधाभावात्समावेशः । संयोगान्तस्य । रसे रसादौ विभक्तावित्यर्थः । रसे इत्यनुवृत्तिसामर्थ्यादङ्गावयवसंयोगान्तत्वमाश्रयणीयम् । ततश्च तत्सौत्रमित्यादौ सकारस्य संयोगान्तत्वाभावः । पुम्भ्यामित्यादौ च भवति । अत्रापि वाऽनुकर्षणाल्लोपाद्वा । ऊर्क्-ऊर्ग् इत्यादौ रेफात्सकारात्परस्य संयोगान्तस्य लोपाभावः । अनड्वानित्यत्र वसां रसे इति दत्वप्राप्तावपि नुम्विधानसामर्थ्यान्न । धौ इत्यत्र चतुराम्शौ चेत्यतः चतुर इत्यस्यानुवृत्तेर्हे प्रियचत्व इत्यत्राप्यम् । हेहयोः प्रगृह्यत्वात्सन्ध्यप्रसङ्गः । अत्र च अमूविधानसामर्थ्यादामोऽपवादः । अन्यथा विशेषाभावात् नुम्च भवत्येव ॥

वसां रसे ॥ वसु स्रंसु ध्वंसु भ्रंसु अनडुह् इत्येतेषां रसे पदान्ते च दत्वं भवति। अनडुद्भ्याम् । अनडुद्भिः।अनडुहे । अनडुद्भ्याम् । अनडुद्भ्यः। अनडुहः।अनडुद्भ्याम्। अनडुद्भ्यः। अनडुहः । अनडुहोः । अनडुहाम्। अनडुहि। अनडुहोः ॥

खसे चपा झसानाम् ॥अनडुत्सु धावम् ॥ अनडुह्शब्दस्य धौ परे अमागमो भवति ॥

सावनडुहः । उ वम् ॥ स्वरहीनं परेण संयोज्यम् । हे अनड्वन् । हे अनड्वाहौ । हे अनड्वाहः इत्यादि । गोदुह्शब्दस्य भेदः ॥

वसामिति । वसामिति बहुवचनं बहूपलक्षकमित्याभिप्रेत्याह । वसुस्रंस्वित्यादि । वसोः प्रत्ययत्वात्प्रत्ययग्रहणेन तदन्तस्येति वसन्तस्येति वस्वन्तस्येत्यर्थः । सोऽपि सान्त एवेति विद्वानित्यादौ तदभावः । पूर्वं दत्वे चासंयोगान्तलोपः ॥

**दादेर्घः** ॥ दादेर्धातोर्हकारस्य घत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । गोदुघ् सि इति स्थिते॥ **आदिजबानां झभान्तस्य झभाः स्ध्वोः** ॥ धातोर्झभान्तस्यादौ वर्तमानानां जबानां झभा भवन्ति सकारे ध्वशब्दे च परे नाम्नश्च रसे पदान्ते च ॥**वावसाने**॥ अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा । गोधुक्-गोधुग् । गोदुहौ । गोदुहः । गोदुहम् । गोदुहौ । गोदुहः । गोदुहा । भकारादौ ॥ **दादेर्घः** ॥ इति घत्वे । आदिजबस्य दकारस्य झभे धकारे च कृते॥**झभे जबाः**॥गोधुग्भ्याम्। गोधुग्भिः ॥ **खसे चपा झसानाम्** । **किलात् षः सः** ॥ इति षत्वम्। क्ष्संयोगे क्षः । गोधुक्षु।हे गोधुक्-हे गोधुग्। हे गोदुहौ।हे गोदुहः। मधुलिह्शब्दस्य विशेषः॥**हो ढः**॥धातोर्हकारस्य ढत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ **वाऽवसाने** ॥ मधुलिट्-मधुलिड् ।

मधुलिहौ ।मधुलिहः । हे मधुलिट्—हे मधुलिड् । हे मधुलिहौ । हे मधुलिहः । मधुलिहम् । मधुलिहौ । मधुलिहः । मधुलिहा । मधुलिड्भ्याम् । मधुलिड्भिः । तुरासाह्शब्दस्य भेदः ॥ **सहेः षः साढि** ॥ साढि रूपे सति सहेर्धातोः सकारस्य षकारादेशो भवति । तुराषाट्—तुराषाड् इत्यादि ॥ **द्रुहादीनां घत्वढत्वे वा** ॥ द्रुहादीनां धातूनां घत्वढत्वे वा भवतः रसे पदान्ते च । मित्रध्रुक्—मित्रध्रुग्;मित्रध्रुट्—मित्रध्रुड् । मित्रद्रुहौ । मित्रद्रुहः । मित्रद्रुहम् । मित्रद्रुहौ । मित्रद्रुहः । मित्रद्रुहा ॥ **झभे जबाः** ॥ मित्रध्रुग्भ्याम्—मित्रध्रुड्भ्याम् । इत्यादि । एवं मुहस्नुहशब्दौ । रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः ॥

दादेरिति । दादित्वं धातुपाठोपदेशावस्थायामपेक्षितम् । ततश्च अधोक् इत्यादौ अडागमे कृते सति " यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते " इति आकारादित्वेऽप्युपदेशावस्थायां दादित्वाद्घत्वमेव । दाम लिहमात्मन इच्छति दामलिह्यति दामलिह्यतीति दामलिट् । इत्यादेर्नामधातोर्दादित्वेऽपि धातुपाठे तदभावान्न घत्वम् । आदिजबानाम् । अत्र वावसाने इत्यतो वानुवृत्तेर्व्यवस्थया जम्भतीति जप् इत्यादौ, तथा दामलिडादौ च न । गर्दभमात्मन इच्छति गर्दभीयति गर्दभीयतीति गर्द्धप् । इत्यादौ मध्यवर्तिनोऽपि दकारस्य झभत्वम् । नाद्यस्यापि गकारस्य । वावसाने । विरामोऽवसानमित्यवसानं प्रसिद्धमेव । अत्र च खसे चपा झसानामित्यतः चपा इति ।

झभे जबा इत्यतश्च जबा इत्यनुवर्तते । ततश्च वाशब्दस्य चार्थत्वादवसाने वर्तमानानां झसानां जबाश्चपाश्च भवन्तीत्यर्थः । विकल्पार्थत्वे तु झसानां चपजबौ वेत्यर्थे रूपत्रयं स्यात् । हो ढः । नाम्नो रसे इत्युक्तेर्ह्लादयति ह्नुते इत्यादौ धातो रसपरत्वे न ढत्वम् । दुहादीनामिति । आदिशब्दान्मुहस्नुहस्निहो गृह्यन्ते । अत्रापि । चार्थो वाशब्दः । अन्यथा घत्वढत्वाभावे तृतीयं रूपं स्यात् । क्वचित्तु घत्वढत्वे वेति पाठः । तदा ढत्वे सति घत्वं वा भवतीत्यर्थः । तन्न । दुहेर्दादित्वेऽप्यस्मादेव वाक्यभेदेन ढत्वम् । क्वचिच्च सूत्रपाठादौ दुहां वेति सूत्रं घश्च पूर्वतः ततश्च द्रुहादीनां घत्वं वा भवति । घत्वाभावे चोत्सर्गतः ढत्वमिति सूत्रार्थो दर्शितः ॥

**चतुराम्शौ च** ॥ चतुर्शब्दस्याऽऽमागमो भवति पञ्चसु परेषु शौ च । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः २ ॥ **रः सङ्ख्यायाः** ॥ रेफान्तसङ्ख्यायाः परस्यामो नुडागमो भवति । णत्वं द्वित्वम् । चतुर्णाम् । चतुर्षु । नकारान्तो राजन्शब्दः ॥ **नोपधायाः** ॥ इति पञ्चसु दीर्घः ॥

चतुरामिति । विसर्गलोपे छान्दसः सन्धिः । चतुर इति साङ्केतिकं षष्ठ्यन्तं वा । पञ्चस्वित्यनुवृत्तिसामर्थ्यात्प्रियचत्वा इत्यादौ गौणत्वेऽपि । रः सङ्ख्याया इत्यनेन सङ्ख्यावाचित्वे । एवं गौणत्वे तु प्रियचतुराम् । प्राधान्ये तु परमचतुर्णाम् । स्रोर्विसर्ग इत्यत्र वानुकर्षणाल्लोकाद्वा चतुर्ष्वित्यादौ विसर्गाभावः । यक्ष्चतुर्ष्विति ज्ञापकाच्च ॥

**नाम्नो नो लोपशधौ** ॥ नाम्नो नकारस्यानागमजस्य लोपश्च भवति रसे पदान्ते चाधौ । राजा । राजानौ । राजानः । राजानम् । राजानौ ॥

**अल्लोपः स्वरेऽम्वयुक्तात्छसादौ ।स्तोः श्चुभिः श्चुः ॥** इति चुत्वेन ञकारः ॥ **जञोर्ज्ञः ॥** जकारञकारयोर्योगे ज्ञो भवति । राज्ञः । राज्ञा । राज्ञे । राजभ्याम् । राजभ्यः २॥ **वेङ्ग्योः ॥** राज्ञि–राजनि । राज्ञोः । राजसु इत्यादि । एवं यज्वन्नात्मन्सुधर्मन्प्रभृतयः । अम्वयुक्तादिति विशेषणादल्लोपो नास्ति । यज्वनः । यज्वना इत्यादि । श्वन्युवन्मघवन्शब्दानां पञ्चसु राजन्शब्दवत् प्रक्रिया । शसादौ तु विशेषः ॥ **श्वादेर्वं उः ॥** श्वादेर्वकारस्य उत्वं भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । शुनः । शुना । श्वभ्याम् । श्वभिरित्यादि । युवन्शब्दस्य वकारस्यौत्वे कृते ॥ **सवर्णे दीर्घः सह ॥** यूनः । यूना । युवभ्याम् । युवभिरित्यादि । प्रथिन्शब्दस्य भेदः ॥

नाम्नो न इति । सामानाधिकरण्ये षष्ठ्यौ। नकारान्तस्य नाम्न इत्यर्थः । नकारान्तत्वं चोपदेशावस्थायामेव । लोपस्यादेशविशेषत्वात्षष्ठीनिर्दिष्टस्येत्यन्तस्य । अन्यथा नरनारायणादिष्वादिभूतस्यापि नस्य लोपप्रसङ्गः । तथा सुहिन् प्रशान् इत्यादावुपदेशकाले नान्तत्वाभावान्न लोपप्रसङ्गः।मो नो धातोरित्यादिना मस्य नकारादेशात् । अधावित्यस्य ङेरप्युपलक्षणार्द्धैदिकत्वाद्वा । परमे व्योमन् इत्यादौ ङावपि नलोपाभावः । जञोर्ज्ञ इत्यत्र जकारात्परेण ञका-

रेण योगे ज्ञ इत्यर्थाद्भवाज्ञानातीत्यादौ न वक्तव्याद्वा । श्वादेः । वसोर्व उमित्यतो व उमित्यनुवर्तते । तत्र च वकारेण युक्तः अः व इत्यर्थावधारणात्सस्वरस्योत्वम्। वकारमात्रोत्वे तु अकारश्रवणं स्यात् न चाकारस्याल्लोपः स्वरे इति लोपः स्यादिति वाच्यम् । सप्तम्येकवचनेऽल्लोपविकल्पात्पक्षे श्रवणप्रसङ्गात् । शसादावित्यादिशब्दादीपिकारे वेत्युक्तम् । क्वचिदीपि इति सूत्रम् । तत्र च ईश्च ईप्च तयोः समाहार ईप् । तस्मिन्नित्यधिकारः[1] । शुनी मघोनी युवतीत्यादौ निपातनान्न । ईकारे च । शोभना युवानो ययोः कुलयोस्ते सुयूनी इत्यादि । मघ कौटिल्ये । मघनं मघः मघोऽस्यास्तीति मघवान् । मघवन्तौ इत्यादि । वत्प्रत्ययान्तो मघवच्छब्दोऽन्य एव ॥

**इतोऽत्पञ्चसु** ॥ पथ्यादीनामिकारस्याकारादेशो भवति पञ्चसु परेषु ॥ **थो न्थ्** ॥ पथ्यादीनां थकारस्य नुडागमो भवति पञ्चसु स्यादिषु परेषु। पन्थन् सि इति स्थिते ॥ **आ सौ** ॥ पथ्यादीनां टेरात्वं भवति सौ परे।पन्थाः । पन्थानौ । पन्थानः । अत्वविधानान्न सेर्लोपः । हे पन्थाः । पन्थानम् । पन्थानौ ॥ **पथां टेः** ॥ पथ्यादीनां टेर्लोपो भवति शसादौ स्वरे परे । पथः । पथा । पथिभ्याम् । पथिभिरित्यादि । एवं मथिन्ऋभुक्षिन्शब्दौ । दण्डिन्शब्दस्य भेदः ॥ **इनां शौ सौ** ॥ इन् हन् पूषन् अर्यमन् इत्येतेषां शौ सौ चाधौ परे उपधाया दीर्घो भवति ।

1 स्वोत्तरवर्तिप्रतिसूत्रवाक्यैकवाक्यतापन्नत्वेन लक्ष्यसंस्कारकत्वम् अधिकारत्वम् ॥

दण्डी । दण्डिनौ । दण्डिनः । हे दण्डिन् । दण्डिनम् । दण्डिनौ । दण्डिनः । दण्डिना । दण्डिभ्याम् । दण्डिभिः इत्यादि । ब्रह्महा । ब्रह्महणौ । ब्रह्महणः । हे ब्रह्महन् । हे ब्रह्महणौ । हे ब्रह्महणः । ब्रह्महणम् । ब्रह्महणौ । शसादौ अकारलोपः ॥

इतोऽदिति । पथां टेरित्यतः पथामित्यनुवर्तते । तत्र पन्थामिति बहुवचनेन मथिन्ऋभुक्षिन्शब्दावप्युपादीयेते । इनां । अत्रापि बहुवचनस्य बहूपस्थापकतामभिप्रेत्याह । इन्हन्नित्यादि । इनः प्रत्ययत्वादिन्नन्तस्य नोपधाया इत्यनेन सिद्धेऽपि नियमार्थः । सिद्धे सत्यारम्भो नियमायेति न्यायात् ॥

हनो घ्न ॥ हन्तेर्धातोर्हकारस्य घकारो भवति नकारे ञ्णिति च परे । घसंयोगो णत्वनिषेधार्थः । ब्रह्मघ्नः । ब्रह्मघ्ना । ब्रह्महभ्याम् । ब्रह्महभिः इत्यादि । पूषा । पूषणौ । पूषणः । हे पूषन् । हे पूषणौ । हे पूषणः । पूषणम् । पूषणौ ॥ षणोः ष्णः ॥ षकारणकारसंयोगे ष्णो भवति शसादौ स्वरे परे । पूषन्शब्दस्य शसादौ स्वरे परे वा टेर्लोपः । पूष्णः । पूष्णा । पूषभ्याम् । पूषभिः । पूष्णोः । ङौ टिलोपो वेति केचित् । पूष्णि—पूषणि । पूष्णोः । पूषसु । अर्यम्णः । अर्यम्णा । अर्यमभ्याम् इत्यादि । सङ्ख्याशब्दाः पञ्चन्प्रभृतयो बहुवचनान्तास्त्रिषु सरूपाः । पञ्चन् जस् इति स्थिते ॥

हन इति । हनः घ् ने इति छेदः । हनो घत् इत्यतो हन् इत्यनुवर्तनीयं ततश्च हन्तेर्नकारे परे हन्तेर्हस्य घत्वं भवतीत्यर्थः । अन्यथा वृत्रहन्नमस्ते जुहावेत्यत्रापि प्रसङ्गात् । तत्र हकाराव्यवहितपरत्वसंभवान्नस्य हाव्यवधानपरत्वम् । ञ्णित्परत्वं तु धातोरिति विवेकः । एवं च वृत्रहणावित्यादावप्रसङ्गः । घसंयोग इति क्वचिदेकपद्यं णत्वहेतुरिति क्वचिच्छब्दाद्धन्तेरकारपूर्वस्यैवेत्यर्थाद् घसंयोगे च तदभावाण्णत्वञेत्यर्थः ॥

**जश्शसोर्लुक्** ॥ षकारनकारान्तसङ्ख्यायाः परयोर्जश्शसोर्लुग् भवति। प्रत्ययलोपे प्रत्ययलक्षणम् । लुकि न तन्निमित्तम् । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः ॥ **ष्णः** ॥ षकारनकारान्तसङ्ख्यायाः परस्यामो नुडागमो भवति ॥ **नोपधायाः** ॥ इति दीर्घः ॥ **नाम्नो नो लोपशधौ** ॥ पञ्चानाम् । पञ्चसु । एवं सप्तन्नवन्दशन्प्रभृतयः ॥ **अष्टनो वा डौ** ॥ अष्टन्शब्दात्परयोर्जश्शसोर्वा डौ भवति डित्त्वाट्टिलोपः । अष्टौ—अष्ट । अष्टौ—अष्ट ॥ **वासु वा आ आसु** ॥ अष्टन आसु परासु विभक्तिषु वा आत्वं भवति । अष्टभिः—अष्टाभिः । अष्टभ्यः—अष्टाभ्यः २ । अष्टानाम् । अष्टसु—अष्टासु । मकारान्त इदम्शब्दः ॥ **इदमोऽयं पुंसि** ॥ इदम्शब्दस्य पुंसि विषये अयमादेशो भवति

सिसहितस्य । अयम् । द्विवचनादौ ॥ त्यदादेष्टेरस्यादौ ॥ इत्यकारः । इद औ इति स्थिते ॥ दस्य मः ॥ त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे । इमौ । इमे । सर्वादित्वात् जसी । त्यदादीनां धेरभावः ॥ इमम् । इमौ । इमान् ॥

जश्शसोरिति । ष्णा इत्यनुवर्तते । तत्र च उपदेशकाल एव ष्णान्तत्वाविवक्षणाच्छतानीत्यादौ लोपाप्रसङ्गः । प्रत्ययलोपे प्रत्ययलक्षणमिति जश्शसोर्लोपेऽपि तन्निमित्तोपधाया दीर्घाकारलोपादिप्राप्तावाह । लुकीति । लुक्शब्देन वर्णादर्शने सति तन्निमित्तमङ्गकार्यं न भवतीत्यर्थः । ष्णः । ष् न् च ष्ण तस्मात् । अत्रापि सङ्ख्यायाः प्राधान्ये परमपञ्चानामित्यादौ भवत्येव । गौणत्वे तु प्रियपञ्चानामित्यादौ न । अष्टन इति । अत्र आकारप्रश्लेषात् वासु इत्यनेन आत्वपक्षे एव डौविधिः । अत्रापि सङ्ख्याया इत्यनुवृत्तेर्गौणत्वेनात्वम् । न वा डौ । वस्तुतो वासु इत्यत्र आ इति तृतीयैकवचनेन सु इति सप्तमीबहुवचनेन च प्रत्याहारग्रहणादत्रात्वाभाव एव । यद्यप्यत्रात्वं स्याड्डाविति डित्करणं व्यर्थं स्यात् गौणत्वेऽप्यात्वं जश्शसोरौत्वं वेत्येके इत्यस्य चानादर एव । अष्टानामित्यत्र नुटि सत्यात्वम् । आत्वे वा उपदेशकाले नकारान्तत्वान्नुट् । आत्वाभावेऽपि नुटि उपधादीर्घे च रसादिपरत्वेन नलोप इति समानरूपत्वादेकमेव रूपम् ॥

अन टौसोः ॥ इदमोऽनादेशो भवति टौसोः परयोः । अनेन ॥ स्भ्यः ॥ इदमः सकारे भकारे च परे अकारो भवति कृत्स्नस्य ॥ अद्भिः ॥ इत्यात्वम् । आभ्याम् ॥ भिस् भिस् ॥ इदमदसोर्भिस्

भिसेव भवति ॥ न भकारस्याकारः ॥ **एस्भि बहुत्वे** ॥ एभिः । अस्मै । आभ्याम् । एभ्यः । अस्मात् । आभ्याम् । एभ्यः । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु । किम्शब्दस्य ॥ **त्यदादेष्टेरः** ॥ इति सर्वत्राकारे कृते सर्वशब्दवद्रूपम् । कः । कौ । के । कम् । कौ । कान् इत्यादि । धकारान्तः तत्त्वबुध्शब्दः । तस्य रसे पदान्ते च ॥ **आदिजबानाम्** ॥ इति भकारः ॥ **वावसाने** ॥ तत्त्वभुत्–तत्त्वभुद् । तत्त्वबुधौ । तत्त्वबुधः । हे तत्त्वभुत्–हे तत्त्वभुद् । हे तत्त्वबुधौ । हे तत्त्वबुधः । तत्त्वबुधम् । तत्त्वबुधौ । तत्त्वबुधः । तत्त्वबुधा । तत्त्वभुद्भ्याम् । तत्त्वभुद्भिः इत्यादि । जकारान्तः सम्राज्शब्दः ॥

इदम इति । अनेकवर्णत्वात्सर्वस्य मकारान्तत्वाद्धसेपः सेर्लोपः । हे असकौ ब्राह्मणीत्यादौ सम्बोधनसम्भवेऽपि प्रचुरप्रयोगाभावादभावोक्तिः स्भ्यः स्भिः अः त्यदादेष्टेरः स्यादावित्यकारे सिद्धेऽपि पुनर्विधानसामर्थ्यात्सर्वस्येत्येके । तदसत् । त्यदादेष्टेरिति टेरकारविधानात् । अनेन चेदमः षष्ठीनिर्दिष्टत्वेनान्त्यस्येति वैयर्थ्याभावात् । अन्ये तु अः इत्यस्य विसर्गपरत्वेन गुरुत्वात्सर्वस्येत्याहुः । तदपि मन्दम् । गुरुशब्दस्यानेकाक्षरपरत्वप्रतिपादनात् । छशषराजादेः ष इत्यादौ ष इत्यस्यापि विसर्गपरत्वेन गुरुत्वापत्त्या सर्वादेशप्रसङ्गात् । प्रयोगे विसर्गाश्रवणाच्च । वस्तुतस्तु इदमोऽयं पुंसी–

त्यत इदम् इति विभक्तिविपरिणामेन प्रथमान्तमनुवर्तनीयम् । ततश्च निर्दिश्यमानस्यादेशा भवन्तीति सर्वस्यैव स्यात् । षष्ठीनिर्दिष्टस्येत्यस्य वक्तव्यत्वेन प्रयोगानुसारित्वादत्राप्रवृत्तिर्वा । भिस् भिसो भिस्विधानं कार्यान्तरव्यावृत्त्यर्थमित्यभिप्रेत्योक्तं न भकारस्याकार इति । इदमदसोरककारयोरेव । अकचि तु इमकैः । अमुकैरित्यादि ॥

**छशषराजादेः षः ॥** छकारान्तस्य शकारान्तस्य षकारान्तस्य च राज्यज्सृज्मृज्भ्राजादेश्च षकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ **षो डः॥** षकारस्य डत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च॥**वावसाने॥** टकारः डकारश्च । सम्राट्–सम्राड् । सम्राजौ । सम्राजः। सम्राजम् । सम्राजौ। सम्राजः। सम्राजा। सम्राड्भ्याम् । सम्राड्भिः इत्यादि । एवं विराजादयः । दकारान्तास्त्यद्तद्यद्एतद्शब्दास्तेषाम्॥ **त्यदादेष्टेरः स्यादौ ॥** इति सर्वत्राकारे कृते सर्वशब्दवद्रूपं ज्ञेयम् ॥

छशषेति । आदिशब्दात् व्रश्च्भ्रस्ज्सृज्मृज्यज्भ्राजादीनां ग्रहणम् । अत्र केचित् । छशषराजादेरित्यत्र षग्रहणं व्यर्थम् । आख्यातादौ डत्वनिषेधार्थमित्युक्तम् । अद्वेट् इत्यादौ डत्वदर्शनात् । न च द्वेष्टीत्यादौ डत्वाभावार्थं डत्वविधायकस्य षोड इत्यस्यापि वैयर्थ्यात् । षट् षड्भ्यां षड्भ्य इत्यादौ वावसाने, झबे जबाः, खसे चपा झसानामित्यादिभिः सिद्धेः। यद्यपि यथासङ्ख्यत्वं नास्ति तथापि ऋटुरषाणां मूर्द्धेत्यादिस्थानादिसाम्यात्स्था-

नेऽन्तरतम इति न्यायेन षस्थाने डविधेः । नच षण्णामित्यत्र षकारस्य डविध्यसंभवात् ड्ण इत्यस्य निर्विषयत्वप्रसङ्गात्षोड इत्यस्य सार्थकत्वमिति वाच्यम् । ड्ण इत्यत्र षकारस्यैव वावसान इति कृतडकारस्य निर्देशात् । सङ्ख्यासम्बन्धिनः षकारस्यैव णत्व-विधानात् धातोर्झसे इति वात्यन्तमसङ्गतमेव । इष्टे द्वेष्टीत्यादौ झसे परेऽदर्शनात् । अत एव पाणिनिनाऽपि छशां ष इत्येवोक्तमित्याहुः तदसत् । सवर्णत्वयथासङ्ख्यत्वाभ्यामत्रादेशविधानात् । तत्र झसा-नामादेशिनां बहुत्वेन जबादीनामादेशानां च पञ्चत्वात्पञ्चकपञ्च-कापेक्षया यथासङ्ख्यत्वम् । तत्र च शषसानां त्रिकत्वेन यथासङ्ख्य-त्वाभावः । वर्ग्यो वर्ग्येण सवर्ण इति सवर्णत्वविधानादेषां सवर्ण-त्वाभावः । प्रत्युत रेफोष्मणां न सवर्ण इति शषसहानामूष्मत्वा-त्सवर्णत्वप्रतिषेधः । स्थानेऽन्तरतम इत्याश्रयणे वर्ग्यो वर्ग्येणेति सवर्णत्वाद्धकारस्थाने दकार इत्यादिवैयर्थ्यप्रसङ्गः । द्वेष्टीत्यादौ खसे चपा झसानामिति च प्रसङ्गाच्च । ड्ण इत्यत्र च षकारस्य नत्वे ष्णाविधानप्रसङ्गात् । अवसाननिमित्ताभावेन नैमित्तिकस्य जबस्य निवृत्तत्वात् । मृड्ढीत्यादिसिद्ध्यर्थं चावश्यं धातोर्झसे इति वक्तव्यं डत्वनिषेधार्थमिति तु क्वचिदेवेति दिक् । आख्याताद्वावि-त्यादिशब्दात् शुष्क इत्यादावपि न । सम्राडित्यत्र क्वचिदपदा-न्तताश्रयणीयेति टोरन्त्यादिति ढुत्वनिषेधः ॥

**स्तः ॥ त्यदादेस्तकारस्य सौ परे सत्वं भवति ।**

**स्यः[1] । त्यौ । त्ये । त्यम् । त्यौ । त्यान् । सः । तौ । ते । तम् । तौ । तान् । यः । यौ । ये । यम् । यौ । यान् । एषः । एतौ । एते ॥**

स्त इति सौ स इत्यतः स इत्यनुवर्तमानेऽपि पुनः सग्रहणसा-

---

१ त्यच्छब्दस्य प्रयोगो हि प्रायशश्छन्दस्येव भवति । यथा चोक्तमुपनिषदि । "सच्च त्यच्चाभवत्" इति ॥

मर्थ्यात् आपि परेऽपि सा इत्यत्र सत्वं क्वचिदित्येव । सा इत्यत्र सत्वं च येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति न्यायात् सादेशानन्तरं चापूर्विधिः ॥

**एतदोऽन्वादेशे द्वितीया टौस्स्वेनो वा वक्तव्यः ॥ ॥ उक्तस्य पुनरुक्तमन्वादेशः । एतम्-एनम् । एतौ-एनौ । एतान्-एनान् । एतेन-एनेन । एताभ्याम् । एतैः । एतयोः-एनयोः। एतेषाम् । एतस्मिन् । एतयोः-एनयोः। एतेषु । छकारान्तस्तत्त्वप्राछ्शब्दः । तत्त्वप्राट्-तत्त्वप्राड् । तत्त्वप्राछौ । तत्त्वप्राछः इत्यादि । थकारान्तोऽग्निमथ्शब्दः । तस्य वावसाने चपा जबाश्च । अग्निमत्-अग्निमद् । अग्निमथौ । अग्निमथः इत्यादि । चकारान्तः प्रत्यच्शब्दः ॥ नोपधायाः ॥ धातोर्हसान्तस्योपधाभूतस्य नकारस्य लोपो भवति ॥**

एतद् इति । समनन्तरस्येदमोऽप्युपलक्षणात्तस्यापि किंचित्क्रियाविशिष्टत्वेनोक्तस्य पुनस्तेनान्येन वा क्रियान्तरविशिष्टत्वेनोक्तिरन्वादेश इत्यर्थः । अत एव " ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्यात् " इत्यादौ स्वरूपेणानिर्दिष्टस्याप्यतः क्रियाविशिष्टत्वेनोक्त्यभावादन्वादेशत्वाभावः । नपुंसके द्वितीयैकवचने श्त्वन्यादेरित्यत्र श्तु इति योगविभागादमः श्तुआदेशे एनदित्यादिसिद्धिः । इमं छात्रं छन्दोऽध्यापय । अथो एनं व्याकरणमध्यापय। अनेन रात्रिरधीता । अतो एनेनाहन्यप्यधीते । अनयोः शोभनं कुलमथो एनयोः प्रभूतं स्वमित्याद्यूह्यम् । एव-

मेतद्दोऽपि वावसान इति नकारदकाराविति सवर्णत्वादित्यर्थः । यथासङ्ख्येन तु यकारः प्राप्नुयात् ॥

**अञ्चेः पञ्चसु नुम्वक्तव्यः** ॥✻॥ प्रत्यन् च् इति स्थिते ॥ **स्तोः श्चुभिः श्चुः** ॥ इति चुत्वेन ञकारे ॥ **संयोगान्तस्य लोपः** । **चोः कुः** ॥ चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च यथासङ्ख्येन । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ ॥

अञ्चेरिति । अञ्चुगतिपूजनयोरेतस्य नो लोप इत्यनेनैव गत्यर्थतायामेव नलोपे पञ्चसु नुम्विधीयते । यद्यपि परत्वान्नश्चापदान्त इत्यनुस्वारः प्राप्नोति तथापि परस्येष्टवाचित्वात्पूर्वविप्रतिषेधेन अनुस्वारे वा परसवर्णत्वे विशेषाभावाच्च स्तोः श्चुभिः श्चुरित्याद्युक्तिः। यत्तु कृताकृतप्रसङ्गित्वेन नित्यत्वात्संयोगान्तलोपे श्चुत्वाभावात्कुत्वप्रसङ्गः । कृते वा श्चुत्वे संयोगान्तलोपे निमित्ताभाव[1]न्यायेन तदभावात्कुत्वमसङ्गतमेव । तस्माद्दिशामिति बहुवचनेन बहूनामुपादानादस्याऽपि तेनैव कुत्वमिति । तदसत् । सख्यावित्यादौ निमित्ताभावन्यायस्याऽनित्यत्वप्रतिपादनात् । वागित्यादावपि दिशामित्यनेनैव कुत्वसम्भवे चोः कुरित्यस्यानर्थक्यापाताच्च । असिद्धं बहिरङ्गमन्तरङ्ग इति बहिरङ्गसंयोगान्तलोपस्यान्तरङ्गे श्चुत्वे सिद्धत्वाच्च ॥

**अञ्चेरल्लोपो दीर्घश्च** ॥ अञ्चेर्धातोरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे तद्धिते ईपीकारे च । निमित्ताभावे नैमित्तिकस्याप्यभावः । प्रतीचः । प्रतीचा । प्रत्यग्भ्याम् ।

---

१ निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायेनेत्यर्थः ॥

**प्रत्यग्भिः । प्रत्यक्षु । एवं तिर्यञ्च्प्रभृतयः । तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । तिर्यञ्चम् । तिर्यञ्चौ ॥**

अञ्चेरिति । ईपीति सूत्रानुवृत्तेरीपि ईकारे चेत्युक्तम् । चकाराच्चानुक्तसमुच्चयार्थात्तद्धिते इति । वेङ्चोरित्यतो वानुवृत्तेस्तस्य च व्यवस्थया पूजार्थस्याञ्चतेः अचेरिति लुप्तनकारानिर्देशे तु पूजार्थस्य नलोपाभावादेव न । अकारस्य लुप्तत्वाच्चाकारस्य चाचश्चेति नियमाद्दीर्घासम्भवाद्विधानसामर्थ्यात्पूर्वस्येति । स चाप्यवहित एव ग्राह्यः । ततश्च प्रतीच इत्यत्र प्र इत्यस्याकारस्याप्रसङ्गः । तद्धिते । प्रतीचीनः-प्रतीच्यः । ईपि । प्रतीची दिक् । ईकारे । प्रतीची कुले । पञ्चस्विति निर्देशेन यत्कार्यं तत्स्त्रीपुंसयोरेवेति नपुंसके नुमभावः " पूजार्थस्य " तु पञ्चस्वविशेषः । शसादौ प्रत्यञ्चः । प्रत्यञ्भ्याम् स्थिते संयोगान्तलोपे कुत्वे च प्रत्यङ्भ्यामित्यादि । सुपि ङणोः कुक्टुगिति कुकि षत्वे क्षादेशे च प्रत्यङ्क्षु ॥

**तिरश्चादयः॥ तिरश्चादयो निपात्यन्ते शसादौ स्वरे परे तद्धिते ईपि ईकारे च । तिरश्चः । तिरश्चा । तिर्यग्भ्याम् । तिर्यग्भिः । तिर्यक्षु । उदच्शब्दस्य उदीच इति निपात्यते शसादौ स्वरे परे । उदीचः । उदीचा इत्यादि । अग्निचित् । तकारान्त उकारानुबन्धो महच्छब्दः ॥**

तिरश्चादय इति । आदिशब्दात् अमुम् अञ्चतीति विग्रहेऽञ्चतौ परेऽदसष्टेरद्र्यादेशे अदद्र्यङ् । अदद्र्यञ्चौ । अदद्र्यञ्चः । अदमुईचः-अमुमुईचः-अदद्रीचः इत्यादयः प्रयोगा अनुसारतो ज्ञेयाः ॥

**ॠितो नुम् ॥ उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पञ्चसु परेषु ॥**

त्रित इति । उश्च ऋश्च वृ वृ इत् यस्य स त्रित् तस्येत्यभिप्रेत्याह । उकारानुबन्धस्येत्यादि । नन्वञ्चतेरप्युकारानुबन्धित्वादनेनैव नुम्सिद्धौ वक्तव्यं[1] न च वक्तव्यमिति चेत्सत्यम् । सिद्धे सत्यारम्भो नियमायेति । धातुषूकारानुबन्धेष्वञ्चतेरेवेति । अतः उखास्रत् पर्णध्वत् इत्यादौ नुमभावः । नुमयम इत्यत्र नुमिति योगविभागादञ्चेरित्यस्य युजेरुपलक्षणत्वाद्वा । युजेरसमासे नुम् । युङ् । युञ्जौ इत्यादि । समासे तु अश्वयुक् । अश्वयुजावित्यादि । पञ्चस्वित्यस्य नपुंसकव्यक्तिविषयत्वेऽपि स्त्रियां त्रित ईब्विधेः पुंसीत्युक्तम् । पुंसोऽसुङित्यतो विभक्तिविपरिणामेन पुंसीत्यनुवृत्तिर्वा । ततश्च कियत् कियती इत्यादौ न नुम् ॥

**न्सम्महतोऽधौ दीर्घः शौ च ॥ न्सन्तस्याप्शब्दस्य महच्छब्दस्य च उपधाया दीर्घो भवति पञ्चसु धीवर्जितेषु शौ च परे । महान् । महान्तौ । महान्तः । महान्तम् । महान्तौ । महतः । महता । महद्भ्याम् । महद्भिः इत्यादि । हे महन् । उकारानुबन्धो भवत्शब्दः ॥**

न्सम्महत इति । न्स् च अप् च महत् च तेषां समाहारः न्सम्महत् तस्य अत्र वादीपोः शतुरित्यतो वानुवृत्तेः महच्छब्दसाहचर्याच्च " अंस विभाजने " इत्यस्य क्विपि अन् अंसावित्यादौ । न्सन्तत्वेऽपि न ॥

**अत्वसोः सौ ॥ अत्वन्तस्यासन्तस्य च दीर्घो भवति धीवर्जितेषु शौ च परे । भवान् । भवन्तौ । भवन्तः इत्यादि । ऋकारानुबन्धस्य भवच्छब्दस्य नुमागम एव न दीर्घः । भवन् । भवन्तौ ।**

---

[1] अञ्चतेर्नुमागमो भवतीति नुम्विधानमित्यर्थः ॥

भवन्तः इत्यादि । पठन् । पठन्तौ । पठन्तः । पठन्तम् । पठन्तौ । पचन् । पचन्तौ । पचन्तः इत्यादि । शकारान्तो विश्शब्दः ॥ छशषराजादीनाम् ॥ इति षत्वम् ॥ षो डः ॥ इति डत्वं च ॥ वावसाने ॥ चपा जबाश्च । विट्-विड् । विशौ । विशः इत्यादि । षकारान्तः षष्-शब्दो नित्यं बहुवचनान्तस्त्रिषु सरूपः ॥ जश्शसोर्लुक् । षो डः ॥ षट्-षड् । षड्भिः । षड्भ्यः २ ॥ ष्णः ॥ इति नुडागमः षड् नाम् इति स्थिते ॥ ड्णः ॥ सङ्ख्यासम्बन्धिनो डकारस्य णत्वं भवति नामि परे ॥ ष्टुभिः ष्टुः ॥ षण्णाम् । षट्सु ॥ क्वचिदपदान्ते पदान्तताश्रयणीया ॥ ❀ ॥

अत्वसोरिति । अतुश्च अस् च अत्वसौ तयोः अत्रापि वानुवृत्तेः सुष्ठु वस्ते सुवः पिण्डम् इत्यादौ न नुमागमः । एवेत्येवकारेण अत्वन्तत्वभावान्न दीर्घ इत्यर्थः । ननु षट्सु इत्यादौ ष्टुत्वं कुतो नेत्यत आह । क्वचित्पदान्तेति । अपदान्तेऽपि पदान्तताश्रयणात् टोरन्त्यादिति ष्टुत्वनिषेधान्न भवतीति भावः ॥

दोषां रः ॥ दोष्सजुष्आशिष्हविष्प्रभृतीनां षकारस्य रेफो भवति रसे पदान्ते च ॥ दोः । दोषौ । दोषः । दोषम् । दोषौ । दोष्शब्दस्य ॥ शसादौ स्वरे परे नान्तता वा वक्तव्या ॥ ❀ ॥

दोषः—दोष्णः । दोषा—दोष्णा । दोर्भ्याम् इत्यादि । सजूः । सजुषौ । सजुषः ॥ **सजुषाशिषो रसे पदान्ते च दीर्घो वक्तव्यः ॥ * ॥** सजूर्भ्यामित्यादि ॥ **पुंसोऽसुङ्॥** पुंस्शब्दस्य पञ्चसु परेषु असुङादेशो भवति ङकारोऽन्त्यादेशार्थः॥ **स्वरे मः ॥** अनुस्वारस्य मकारो भवति स्वरे परे । पुमस् सि इति स्थिते । **त्रितो नुम्।न्सम्महतोऽधौ दीर्घः शौ च। संयोगान्तस्य लोपः ॥** पुमान् । पुमांसौ । पुमांसः । पुमांसम् । पुमांसौ । पुंसः । पुंसा । पुंभ्याम् । पुंभिः । हे पुमन् ॥

दोषामिति। अह्नो रो रात्रिष्वित्यतो र इत्यनुवर्तते बहुवचनं बहूनां ग्राहकमित्याभिप्रेत्याह । दोष्सजुषित्यादि । यद्यपि दाम्यतीति दमेर्डोसि दोरिति ततश्च परत्वात्स्रोर्विसर्गे इत्यनेनैव सिद्धिस्तथापि जुषी प्रीतौ जोषणं जुट् तेन सह वर्तत इति सजूर्मित्रमिति रप्रकृतिकस्य विसर्गोप्राप्तेस्तदर्थंक्रियमाणमेषामप्युपकारकम् अव्युत्पन्नपक्षाश्रयेण वा। नचाशीष्यतीत्यादौ रेफप्रकृतिकस्य खपे वेत्यनेन पक्षे रेफादेशप्रसङ्गः स्यादिति वाच्यम्। वक्तव्यत्वाद्वाशब्दव्यवस्थया वा तदभावात् शसादावन्नन्तता वा वक्तव्येत्यत्र अकारोपादानं भ्यामित्यादौ ङौ च पक्षे श्रवणार्थम् । सजुषाशिषोरिति र्वोर्विहस इति सूत्रेणेत्यर्थः । आङ्पूर्वस्य शसेः क्विपि उपधाया इकारे धातुसंबन्धित्वादिवर्णोवर्णयोः अथवा वक्तव्यारम्भसामर्थ्यात् र्वोर्विहस इति दीर्घविधेरसार्वत्रिकत्वद्योतनात्। कुर्व इत्यादौ दीर्घाभावः । अव्युत्पन्नपक्षाश्रयेऽपि दीर्घविध्यर्थं वा सप्तमीबहु-

वचने धातोरपि रेफस्य विसर्गः । धातोर्नेति नियमात् । ततश्च वा शरीति विसर्जनीयसकारौ ॥

**असम्भवे पुंसः कक् सौ ॥** वेदान्तैकवेद्यस्यात्मनो बहुत्वासम्भवेऽर्थे वाच्ये सति पुंस्शब्दस्य सुपि परे कगागमो भवति ॥ **स्कोराद्योश्च ॥** संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । पुङ्क्षु[1] । एवं विद्वस्शब्दः । विद्वान् । विद्वांसौ । विद्वांसः । विद्वांसम् । विद्वांसौ ॥

असम्भवे इति । वेदान्तैकवेद्यस्यात्मनः " एकमेवाद्वितीयं, नेह नानास्ति किंचन " इत्यादिभिरेकत्वेन प्रतिपादितस्य पुंसः बहुषु बहुवचनमिति बह्वर्थवाचित्वे विहितबहुवचनासम्भव इत्यर्थः । अथवा संयोगान्तलोपेन पुंस्विति सर्वत्र सम्भवे एवमुक्तिः । पुंक्षु बहुष्वपीत्यादिप्रयोगस्यासंभवे उद्भाविते कग्विधानेन सम्भवतीत्यर्थः । तत्र संयोगान्तलोपे एकदेशविकृतस्यानन्यत्वेन कगागमे षत्वे क्षादेशे मस्यानुस्वारः । यत्तु मध्यवर्तिनोऽपि सकारस्यादित्वविवक्षया स्कोराद्योश्चेति सलोप इति । तदसत् । एवंविधादित्वविवक्षया अप्रामाणिकत्वात् । उक्तयुक्त्यैव सम्भवे क्लिष्टकरणे प्रमाणाभावात् अतिप्रसङ्गाच्च ॥

**वसोर्व उः ॥** वसोः सम्बन्धिनो वकारस्य उत्वं प्राप्नोति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । विदुषः । विदुषा ॥ **वसां रसे ॥** विद्वद्भ्याम् ।

---

1 'पुंक्षु' इत्येतद्रूपोच्चारणमेवैतच्छास्त्रप्रणयननिदानमिति वृद्धमुखगीतिः शिष्यप्रशिष्यपरम्परामनुसंक्रामति ॥

विद्वद्भिः। विद्वत्सु इत्यादि । सुवचस् शब्दस्य ॥ अत्वसोः सौ ॥ इति दीर्घः । सुवचाः । सुवचसौ। सुवचसः। हे सुवचः। सुवचसम्। सुवचसौ। सुवचसः। सुवचसा । सुवचोभ्याम्। सुवचोभिः । उशनस् शब्दस्य भेदः ॥ उशनसाम् ॥ उशनस् पुरुदंसस् अनेहस् इत्येतेषां सेरधेर्डा भवति। डकारष्टिलोपार्थः । उशना । उशनसौ ॥ उशनसो [1]धौ सान्तता नान्तता अदन्तता वा वक्तव्या ॥ ❀ ॥ हे उशनः—हे उशनन्—हे उशन । अदस् शब्दस्य विशेषः। त्यदादेष्टेरिति सर्वत्राकारः । अद सि इति स्थिते ॥

वसोः इति। अत्रापि पूर्ववद्वकारसहिताकारस्य उत्वम् । वसोरेकानुबन्धकस्य द्व्यनुबन्धकस्यापि क्वसोरप्युपलक्षणत्वात्तस्थिवान् । तस्थुषः । वस्योत्वे निमित्ताभावादिति न्यायेनेण्निवृत्तावातोऽनपीत्यालोपः । तथा जगन्वान् जग्मुष इत्यत्रापि मो नो धातोरित्यस्याभावः निमित्ताभावात् । तद्धिते वैदुष्यं विदुष्मान् । ईपि विदुषी । ईकारे । विदुषी कुले । उशनसो धाविति । सकारान्तस्योशनश्शब्दस्य सकारस्थाने नकारेण नान्तता सकारलोपेन चादन्ततापीत्यर्थः। नान्तादन्तयोर्विकल्पे पक्षे सान्तप्रकृतिरपीति त्रिरूपत्वं चोक्तमेव ॥

सौ सः ॥ अदसो दकारस्य सौ परे सत्वं भवति ॥सेरौ॥ अदसः सेरौ भवति । असौ । द्विवचने ।

[1] अत एव " सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् । माध्यन्दिनिर्वष्टि " इति कारिकयापि त्रिरूपत्वं प्रोक्तम् ॥

अदस् औ इति स्थिते दस्य मः ॥ मादू ॥ उश्च ऊश्च ऊ । अदसो मकारात्परस्य ह्रस्वस्य ह्रस्व उकारो भवति दीर्घस्य च दीर्घ ऊकारो भवति। अमू। बहुवचने सर्वादित्वात् ॥ जसी ॥ इति ई ॥ अइ ए ॥ अमे इति स्थिते ॥

सौ इति । अत्र त्यदादेरित्यनुवृत्तावपीदमो दस्य सावसम्भवाददस इत्युक्तम् । मादू उ इति विगृह्य व्याचष्टे । उश्च ऊश्चेति । आदेशयोरेकमात्रद्विमात्रत्वान्मात्परावादेशिनावपि एकमात्रद्विमात्रौ ग्राह्यौ । ततश्चान्तरतमत्वादेकमात्रस्यैकमात्रः उः । द्विमात्रस्य च द्विमात्र इत्यर्थः ॥

एरी बहुत्वे ॥ बहुत्वे सत्यदस एकारस्य ईकारो भवति । अमी । अमुम् । अमू । अमून् । मत्वे उत्वे च कृते॥ टा नास्त्रियाम् ॥ अमुना। द्विवचने ॥ अद्भिः॥ इत्यात्वं पश्चादुकारः । अमूभ्याम् ॥ भिस् भिस् ॥ इदमदसोर्भिस् भिसेव भवति। न भकारस्यैकारः। अमीभिः ।अमुष्मै । अमूभ्याम् । अमीभ्यः । अमुष्मात् । अमूभ्याम् । अमीभ्यः । अमुष्य । ओसि एत्वे आयादेशे च कृते पश्चादुकारः । अमुयोः । अमीषाम् । अमुष्मिन् । अमुयोः । अमीषु ॥ सामान्ये अदसः कः स्यादिवच्च ॥ अमुकः । अमुकौ। अमुके ॥ इति हसान्ताः पुंल्लिङ्गाः ॥

एरीति। अत्रापि मादित्यनुवृत्तेरमुके इत्यत्र मत्वे च कृत इति वक्तव्यमेतत् । अन्यथा एवंविधनियामकाभावात् । सामान्ये इति। सामान्ये विशेषाप्रकाशनेऽर्थे अदस्शब्दात्कप्रत्ययो भवति स च स्यादिवत्। सेः सिप्रत्ययस्यादिः प्रकृतिः अदस्शब्दस्तद्वत् । तत्सहितस्याप्यदसोऽदस्कार्यं भवतीत्यपि तन्त्रेणार्थः । अथवा सिशब्देन सकार उपलक्ष्यते ततश्च सेः सकारस्य आदिवदिति स्यादिवत् सकारात्पूर्वं भवतीत्यर्थः । ततश्च तन्मध्ये पतितस्तद्ग्रहणेन ग्राह्य इति कप्रत्ययसहितस्य सेरौ सौ स इत्यादिकार्ये । वस्तुतः स्यादिवदित्येव पाठः । असकौ इति स्त्रीपुंसयोः। नपुंसके अदक इति सेरौ इत्यत्र ह्रस्वो वेत्यतो मण्डूकप्लुत्या वानुवृत्तेः कप्रत्ययसहितस्य वा औत्वाभावपक्षे च स्यादिवच्चेति चकारादधिकार्थात्सात्परस्यौत्वे अमुकः। केचित्तु कप्रत्ययस्य स्यादित्वातिदेशात्कप्रत्ययेऽपि त्यदाद्यत्वमत्वोत्वादि भवति। व्यवधानाच्च न सत्वौत्वेऽत एव चामुकशर्मेत्यादिप्रयोगसिद्धिरित्याहुः। तदसत्। पाणिनिविरोधात्[1]। अमुकस्मै । अमुकस्मादित्यादिषु कप्रत्ययसहितस्य सर्वादिकार्याभावप्रसङ्गाच्च अमुकशर्मेत्यादि तु पृथक् शब्दत्वादेव ॥

इति सारस्वतप्रसादे हसान्ताः पुँल्लिङ्गाः ।

## अथ हसान्ताः स्त्रीलिङ्गाः।

**तत्र हकारान्त उपानह्शब्दः ॥ नहो धः ॥ नहो हकारस्य धकारादेशो भवति रसे पदान्ते च ॥ वावसाने ॥ धस्य दत्वं तत्वं च । उपानत्-उपानद् । उपानहौ । उपानहः । हे उपानत् ।**

---

१ पाणिनिमते हि "अदक" इत्येव साकच्कोऽदस्शब्दः । 'अमुक' शब्दश्च अदस्शब्दार्थकस्तस्माद्भिन्न एवेत्याह भगवान् । अत एव प्रायो ब्रह्मवाक्यादौ "अदक" शब्दमेव व्यवहरन्ति याज्ञिकाः । यथा अदकशर्मणे पित्रे इमं पिण्डं स्वधा इति ॥

उपानहम् । उपानहौ । उपानहः।उपानहा । उपानद्भ्याम् । उपानद्भिः इत्यादि । वकारान्तो दिव्शब्दः ॥ **दिव औ** ॥ दिवो वकारस्य औकारादेशो भवति सौ परे । द्यौः । दिवौ । दिवः । हे द्यौः ॥ **वामि** ॥ दिवो वकारस्यामि परे वा आत्वं भवति । द्याम्–दिवम् । दिवौ । दिवः । दिवा ॥

नह इति । इति धातोश्च झस इत्यधिकारादवनद्धमित्यादावपि उपनह्यत इत्युपानत् । दिव इति । अधावित्यनुवृत्त्यभावात् हे द्यौः॥

**उरसे** ॥ दिवो वकारस्य रसे परे उकारो भवति। द्युभ्याम् । द्युभिः । द्युषु इत्यादि । रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः ॥ **त्रिचतुरोः स्त्रियां तिसृचतसृवत्** ॥ ॐ ॥ स्त्रियां वर्तमानयोः त्रिचतुर्शब्दयोः तिसृ चतसृ इत्येतावादेशौ भवतः विभक्तौ परतः । ऋकारश्च ऋकारवत् । ततः ॥ **स्तुरार्** ॥ इत्यार् न भवति । तिस्रः । तिस्रः । तिसृभिः । तिसृभ्यः।तिसृभ्यः॥ **न तिसृचतसृ । छन्दसि वा** ॥ एतयोर्दीर्घो न भवति नामि परे। तिसृणाम् । छन्दसि तु वा भवति । तिसॄणाम्–तिसृणाम् । तिसृषु । एवं चतसृ । गिर्शब्दस्य भेदः ॥

उरसे इति । उश्च रसश्च उरसं तस्मिन् । वसोर्वा उमित्यत उमित्यनुवर्तते ततश्च द्यूषित इत्यादि । केचित्तु ऊरसे इति पेठुः ।

सूत्रे उ उरसे इति छेदः । रहस्य हसोपलक्षणात् उ उ इति योगविभागाद्वा द्युहय इत्यादौ हकारेऽपि उत्वम् । त्रिचतुरोः स्त्रियां तिसृ चतसृ । ऋऋवदिति छेदः । स्त्रियामिति त्रिचतुरोर्विशेषणम् । स्त्रीवाचकयोरित्यर्थः । ततश्च प्रियास्तिस्रश्चतस्रो वा यस्यासौ प्रियतिसा प्रियचतसेत्यादौ पुंस्यपि स्त्रीवाचकत्वाद्भवत एवादेशौ । प्रियास्त्रयस्त्रीणि वा चत्वारः चत्वारि वा यस्याः सा प्रियत्रिः प्रियचत्वा इत्यादौ त्रिचतुरोः स्त्रीवाचकत्वाभावात्स्त्रियामपि नादेशौ । ततः स्तुरार् इत्यार् न भवतीति ऋतो ङ उरित्यतः ऋत इत्यनुवृत्तेस्तस्य च तपरत्वेन तावन्मात्रग्राहकत्वादस्य च ऋकारातिदेशात् स्तुरार् इति सूत्रेण आर् न भवतीत्यर्थः। अपवादनिवृत्तावुत्सर्गसिद्धिरिति अर् अपि तुल्यन्यायत्वान्न अम्शसोरस्य सो नः पुंसः इत्यत्रानेकार्थः समानानुवृत्तेस्तिसृचतसृभ्यां शसोऽल्लोपो नत्वं च न । दीर्घ ऋकारान्तादेशमपहाय तदतिदेशादामि नुट् । तथा गौणत्वेऽपि अम्शसोरस्य ऋतो ङ उः ङौ सो नः पुंस इत्यादि न सेरा धेरर् इत्यादि च भवति ॥

**य्वोर्विहसे** ॥ धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हसपरयोः पदान्ते च । गीः । गिरौ । गिरः । हे गीः । गिरम् । गिरौ । गिरः । गिरा । गीर्भ्याम् । गीर्भिः । गीर्षु । एवं धूः । धुरौ । धुरः । हे धूः । पूः । पुरौ । पुरः । हे पूः । पुरा । पूर्भ्याम् । पूर्भिः । पूर्षु । धकारान्तः समिध्शब्दः । समित्-समिद् । समिधौ । समिधः । हे समित्-हे समिद् । समिद्भ्याम् । समिद्भिः । समित्सु । भकारान्तः ककुभ्शब्दः । ककुप्-ककुब् । ककुभौ । ककुभः । हे ककुप्-हे ककुब् इत्यादि ।

दकारान्तास्त्यदादयस्तेषाम्॥त्यदादेष्टेः॥इति सर्वत्राकारः॥आबतः स्त्रियाम्॥इत्याप्॥स्या। त्ये। त्याः। सा। ते। ताः। या। ये। याः। एषा। एते। एताः। अन्वादेशे। एताम्-एनाम्। एते-एने। एताः-एनाः। एवं किम्। का। के। काः॥

य्वोरिति। इश्च उश्च यू तयोः र् च व् च र्वू तस्मिन्। सिलोपेऽपि प्रत्ययलोपे प्रत्ययलक्षणमिति दीर्घः। य्वोरिति योगविभागात्सुपीः सुपिसौ इत्यादौ सेर्लोपे सत्यविसर्गेऽपि इकारस्य दीर्घः। दोषामिति रेफादेशो वा॥

इयं स्त्रियाम्॥ इदम्शब्दस्य स्त्रियामियं भवति सौ परे सिसहितस्य। इयम्। इमे। इमाः। इमाम्। इमे। इमाः। अनया। आभ्याम्। आभिः। अस्यै। आभ्याम्। आभ्यः इत्यादि। चकारान्तः त्वच्शब्दः॥ चोः कुः॥ इति कुत्वम्। त्वक्-त्वग्। त्वचौ। त्वचः। त्वग्भ्याम्। त्वक्षु। हे त्वक्। एवं ऋच्वाच्प्रभृतयः। अप्शब्दो नित्यं बहुवचनान्तः। अप् जस् इति स्थिते॥ न्सम्महतः॥ इति दीर्घः। आपः। द्वितीयाबहुवचने पञ्चसु इति विशेषणात् न दीर्घः। अपः॥

इयमिति। आदेशविधानसामर्थ्यात्त्यदाद्यत्वाभावः। हसान्तत्वात्सिलोपः। आभ्यामित्यादावकारादेशे आप्। प्रातिपदिकन्या-[1]

1 प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायेनेत्यर्थः॥

येनाप्सहितस्य त्वकारादेशे अद्भीत्यत्रादेति योगविभागाद्दत्वे-नेष्टसिद्धिः ॥

भि दपाम् ॥ अबादीनां भकारे परे दत्वं भवति । अद्भिः । अद्भ्यः । अद्भ्यः । अपाम् । अप्सु । शकारान्तो दिश्शब्दः ॥ दिशां कः ॥ दिश् दृश् स्पृश् मृश् इत्यादीनां रसे पदान्ते च कत्वं भवति । दिक्-दिग् । दिशौ । दिशः । हे दिक्-हे दिग् । दिशम् । दिशौ । दिशः । दिशा । दिग्भ्याम् । दिग्भिरित्यादि । षकारान्तस्त्विष्-शब्दः ॥ षो डः ॥ इति डत्वम् ॥ वावसाने॥ टकारः॥ त्विट्-त्विड् । त्विषौ । त्विषः । हे त्विट्-हे त्विड् । हे त्विषौ । हे त्विषः । त्विषम् । त्विषौ । त्विषः । त्विषा । त्विड्भ्याम् । त्विड्भिः इत्यादि । आशिष्शब्दस्य सजुष्शब्दवद्रूपं ज्ञेयम् । आ-शीः । आशिषौ । आशिषः । आशीर्भ्याम् । आशीष्षु-आशीःषु । हे आशीः । स्त्रीलिङ्ग-स्यादस्शब्दस्य सौ न विशेषः । द्विवचनादौ टेरत्वे मत्वे च कृते अनन्तरम् ॥ आबतः स्त्रि-याम् ॥ इत्याप् दीर्घत्वं विभक्तिकार्यं पश्चात् ॥ मादू ॥ इति ह्रस्वस्य दीर्घस्य उकार ऊका-रश्च । असौ । अमू । अमूः । अमूम् । अमू ।

अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमूभ्याम् । अमूभ्यः । अमुष्याः । अमूभ्याम् । अमूभ्यः । अमुष्याः । अमुयोः । अमूषाम् । अमुष्याम् । अमुयोः । अमूषु ॥ इति हसान्ताः स्त्रीलिङ्गाः ॥

भिदपामिति । अपामिति बहुवचनान्तनिर्देशान्नित्यबहुवचनान्तस्यैव दत्वं स्यान्न गौणत्वे अत उक्तमबादीनामिति । तस्य तदुत्तरपदस्य चेति तदुत्तरप्रभृतीनामपि भवतीति भावः । षष्ठीनिर्दिष्टत्वादन्तस्य । दिशाम् । चोः कुरित्यतः कुरित्यनुवर्तते । बहुवचनात्प्रयोगतो दधृषतुः । स्निहप्रभृतयोऽप्यूह्याः ॥

इति सारस्वतप्रसादे हसान्ताः स्त्रीलिङ्गाः ।

अथ हसान्ता नपुंसकलिङ्गाः प्रदर्श्यन्ते ।

रेफान्तो वार्शब्दः ॥ **नपुंसकात्स्यमोर्लुक्** ॥ वाः २ । वारी २ । वारि २ । अयम इति विशेषणान्नुम् न भवति । वारा । वार्भ्याम् । वार्भिः । वारे इत्यादि । चतुर्शब्दे ॥ **चतुराम्शौ च** ॥ इत्याम् । चत्वारि । चत्वारि । चतुर्भिः । चतुर्भ्यः । चतुर्भ्यः । चतुर्णाम् । चतुर्षु । नकारान्तोऽहन्शब्दः ॥ **अह्नः सः** ॥ अहन्शब्दस्य नकारस्य सकारो भवति रसे पदान्ते च॥**स्रोर्विसर्गः** ॥ अहः ॥ **ईमौ** । **वेङ्योः**॥ अह्नी-अहनी । अहानि । अह्ना । अहोभ्याम् ।

अह्नोभिः। अह्ने। अहोभ्याम्। अहोभ्यः।अह्नः। अहोभ्याम्। अहोभ्यः। अह्नः। अह्नोः। अह्नाम्। अह्नि-अहनि। अह्नोः। अहस्सु॥ **ब्रह्मन्शब्दस्य रसे पदान्ते च नस्य लोपो वक्तव्यः॥ * ॥** ब्रह्म। ब्रह्मणी। ब्रह्माणि। पुनः। ब्रह्म। ब्रह्मणी। ब्रह्माणि। ब्रह्मणा। ब्रह्मभ्याम्। ब्रह्मभिः इत्यादि॥ **सम्बोधने धौ नपुंसके नलोपो वा वक्तव्यः॥ * ॥** हे ब्रह्मन्-हे ब्रह्म। एवं चर्मन्वर्मन्शर्मन्कर्मन्व्योमन्दामन्नामन्प्रभृतयः॥ **नान्तादन्ताच्छन्दसि ङिश्योर्लोपो वक्तव्यः॥ * ॥**

अयञ इति। नुमयम इत्यत्र नपुंसकस्येत्यस्य अयम इति विशेषणादित्यर्थः। अह्नः। सस्ताविलयतः स इति। ब्रह्मन्शब्दस्येति नाम्नो नो लोपशधावित्यनेनेत्यर्थः। अन्यथा ब्रह्मभ्यां ब्रह्मभिरित्यादावह्नीत्यादिप्रसङ्गः। अधाविति निषेधस्य नोक्तमनित्यमिति नाम्नो लोपशिति योगविभागाद्वा सम्बुद्धौ नपुंसकानां नलोपो वेति। हे ब्रह्म-हे ब्रह्मन्॥

**छन्दस्यागमजानागमजयोर्लोपालोपौ च वक्तव्यौ॥ * ॥** परमे व्योमन् सर्वा भूतानि। त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न भवति। स्यादाविति विशेषणात् द्विवचनादौ टेरत्वे कृते सर्वशब्दवद्रूपं नेयम्। त्यत्। त्ये।

त्यानि । पुनः । त्यत् । त्ये । त्यानि । त्येन । त्याभ्याम् । त्यैरित्यादि । एवं । तत् । ते । तानि २ । यत् । ये । यानि २ । एतत् । एते । एतानि २ । किम् । के । कानि २ । इदम् । इमे । इमानि २ । तृतीयादौ सर्वत्र पुंवत् । चकारांतः प्रत्यञ्च्शब्दः । प्रत्यक्-प्रत्यग् ॥ **अञ्चेरलोपो दीर्घश्च** ॥ प्रतीची ॥ **नुमयमः** ॥ प्रत्यञ्चि२ । तकारान्तो जगच्छब्दः । जगत् । जगती । जगन्ति । पुनः २ । जगता । जगद्भ्याम् । जगद्भिरित्यादि । महच्छब्दे तु ॥ **न्सम्महतः** ॥ इति सिविषये दीर्घो न । महत् । महती । महान्ति २ इत्यादि । षकारान्तो हविष्शब्दः सजुष् च । हविः । हविषी । हवींषि २ इत्यादि । सजूः । सजुषी । सजूंषि २ । एवं सकारान्ताः पयस्तेजस्वर्चस्प्रभृतयः । पयः । पयसी । पयांसि २ । पयसा । पयोभ्यामित्यादि । अदस्शब्दस्य स्यमोर्लुकि कृते स्त्रोर्विसर्गः । द्विवचनादौ टेरत्वे कृते मत्वोत्वे । अदः । अमू । अमूनि । पुनः । अदः । अमू । अमूनि । अमुना । अमूभ्याम् । अमीभिः । अमुष्मै । अमूभ्याम् । अमीभ्यः । अमुष्मात् । अमूभ्याम् । अमीभ्यः । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् ।

**अमुयोः । अमीषु । पुँल्लिङ्गवत् ॥ इति हसान्ता नपुंसकलिङ्गाः ॥**

छन्दसीति । सर्वेत्यत्र सिलोपे आगमजस्यापि नस्य छान्दसो लुक् निमित्ताभावन्यायस्य वा नित्यत्वाद्दीर्घस्यानिवृत्तिः । अथवा वा अ आ इति च्छेदः । ततश्च शिलोपे निमित्ताभावन्यायेन नुमुपधादीर्घयोर्निवृत्तौ अकारस्य आकारः । अथवा वा आ इति च्छेदः । एवं च टेर्लोपः । शेश्च आ भवतीत्यर्थः । ततश्च शिपरत्वाभावादागमजमनित्यनित्यत्वाद्वा नुमभावे सवर्णदीर्घः । अधावित्यत्र ङेरुपलक्षणत्वाच्छन्दस्त्वाल्लोपश्[1] । संज्ञापूर्वकत्वेनानित्यत्वाद्वा । व्योमन् इत्यत्र नलोपाभावः । परमे भूतानीति ङिस्यन्तत्वद्योतनार्थम् । त्यदादीनामिति । "लुकि न तन्निमित्तम्" इति प्रतिषेधादित्यर्थः ॥

इति सारस्वतप्रसादे हसान्ता नपुंसकलिङ्गाः ।

## अथ युष्मदस्मदोः स्वरूपं निरूप्यते ।

**तयोश्च वाच्यलिङ्गत्वात् त्रिष्वपि लिङ्गेषु समानं रूपम् ॥ त्वमहंसिना ॥ युष्मदस्मदोः सिसहितयोस्त्वमहमित्येतावादेशौ भवतः यथासङ्ख्येन। त्वम् । अहम् ॥ युवावौ द्विवचने ॥ युष्मदस्मदोर्द्विवचने परे युवाव् इत्येतावादेशौ भवतः ॥**

अथेति । त्रिलिङ्गस्वरान्तहसान्तनिरूपणानन्तरं नाम्नि च युष्मदि चास्मदि च भागैरित्यादौ नामभ्यः पृथक्कार्यकारित्वादनयोः पृथगुक्तिर्युक्तैव । स्वमेव रूपं स्वरूपं विस्तरभयाद्गौणत्वादिपरित्यागेन सत्त्वोद्रिक्तधर्मराहित्येनार्थस्वरूपमात्रवाचित्वेन चेत्यर्थः ।

---

१ संज्ञापूर्वको विधिरनित्य इति परिभाषयेत्यर्थः ॥

वाच्यलिङ्गत्वादिति । वचनं वाक् अस्यां लिङ्गत्वात् स्वविषये लिङ्ग-द्योतकाभावादित्यर्थः । अयमर्थः । सर्वस्य त्रिगुणारब्धत्वेन सत्वो-द्रिक्तवाचित्वे पुंस्त्वं रजउद्रिक्तवाचित्वे स्त्रीत्वम् । तमउद्रिक्तवाचित्वे नपुंसकत्वं भवति । अनयोस्तु धर्मिमात्रवाचित्वेनालिङ्गत्वम् । अथवा उपचयापचयाद्यभाववाचित्वादलिङ्गत्वम् । अत एवोक्तम् । "अलिङ्गे युष्मदस्मदी" इति केचित्तु "वाच्यमित्युच्यते भेद्यं तल्लिंगं भजते तु यः।विशेषणत्वमापन्नो वाच्यलिंगः स उच्यते॥" इति विशेष्यलिंगत्वादलिंगत्वमित्याहुः । तदसत् । शुक्लादिशब्दा-नामपि वाच्यलिंगत्वेनालिंगत्वप्रसक्त्या आबाद्यभावप्रसंगात् । अ-त्रापि स्त्रीवाच्यत्वे आप्प्रसंगाच्च । त्वमहं साङ्केतिकं प्रथमाद्विव-चनान्तम् । सिना जसा ङ्या ङसेति सहार्थतृतीयानिर्देशात्समासे प्रधानत्वे गौणत्वे चानयोः सदैव एते आदेशा भवन्तीति सूचि-तम् । ततश्च परमत्वं परमाहं तथा त्वां मां युवाम् आवां युष्मान-स्मान्वातिक्रान्त इति विग्रहे अतित्वम् । अत्यहम् एवं जसादि-ष्वपि । युवावौ । द्वयोः वचनं द्विवचनम् । द्व्यर्थवाचित्वमित्यर्थः । ततश्च गौणत्वे द्व्यर्थवाचिनोर्युष्मदस्मदोर्द्विवचनपरत्वाभावेऽपि युवावौ स्त एव । यथा युवाम् आवाम् अतिक्रान्तम् अतिक्रान्तान् अतिक्रान्तेनेत्यादि विग्रहे अतियुवाम्—अत्यावाम् । अतियुवान्—अत्यावान् । अतियुवया—अत्यावयेत्यादि । ननु द्विवचनपरत्वा-भावेऽप्यादेशे युवयोरावयोर्वा पुत्रः युष्मत्पुत्रः अस्मत्पुत्र इत्यादा-वपि द्व्यर्थवाचित्वाद्युष्मदस्मदोर्युवावौ स्यातामिति चेत् । मैवम् । य्वौ वेत्यतो वानुवृत्तेर्व्यवस्थया तदभावात् ॥

**आमौ ॥ युष्मदस्मदोः पर औ आम् भवति । युवाम् । आवाम् ॥ यूयं वयं जसा ॥ जसा सहितयोर्युष्मदस्मदोर्यूयं वयं इत्येतावादेशौ भवतः ॥ त्वन्मदेकत्वे ॥ युष्मदस्मदोस्त्वत्**

वाग्रहणात्कल्याणीप्रिय इत्यादौ न भवति ॥ गोः ॥ गोशब्दस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति । पञ्च गावो यस्य स पञ्चगुः ॥

वाग्रहणादिति । निपातत्वादनेकार्थत्वादित्यर्थः । अतश्च उक्तपुंस्कस्यैवात्र । रूढं पुंवत्त्वं नेत्याह । गङ्गाभार्यः । वामोरूभार्यः । तथा यङ्मानिन्त्वतशसतरतमादौ पुंवत् । एनीवाचरति एतायते । पुंवद्भावादाब्निवृत्त्या पत्न्यादय इति निपातितस्य नस्यापि निवृत्तिः । पण्डितामात्मानं मन्यते पण्डितमानिनी । त्वतयोर्गुणवाचकस्यैव पुंवद्भावः । पट्व्या भावः पटुता—पटुत्वम् । नेह । कुटित्वम् । अत्र जातिवाचित्वम् । अल्पायै देहि अल्पशः । पटुतरा । पटुतमा । एवं चरट्जातीयकल्पदेश्यदेशीयरूपपाशादौ । पटुचरी । पटुजातीया । दर्शनीयकल्पा । दर्शनीयदेश्या । दर्शनीयदेशीया । दर्शनीयरूपा । दर्शनीयपाशा । तथा कुक्कुट्यादीनामण्डादिषु । कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृगपदम् । मृगक्षीरम् । काकशावः इत्यादयः प्रयोगानुसारेणोह्याः ॥

सङ्ख्यासुव्याघ्रादिपूर्वस्य पादशब्दस्यालोपो वक्तव्यः ॥ ❀ ॥ सहस्रं पादा यस्य स सहस्रपात् । शोभनौ पादौ यस्य स सुपात् । व्याघ्रस्य पादाविव पादौ यस्य स व्याघ्रपात् । द्वौ पादौ यस्य स द्विपात् । द्विपादौ । द्विपादः । द्विपादम् । द्विपादौ ॥ शसादौ स्वरे परे पदादेशश्च वक्तव्यः ॥ ❀ ॥ द्विपदः । द्विपदा । द्विपाद्भ्याम् । द्विपाद्भिः इत्यादि ॥

सङ्ख्यासुव्याघ्रादिपूर्वस्येति । व्याघ्रादय उपमानवाचिन एते पूर्वं यस्य तस्येत्यर्थः । शसादाविति । चकारादनुक्तसमुच्चयार्थादीकारे ईपि आपि तद्धितेऽपि । द्विपदी । कुले । द्विपदी-द्विपदा । ऋक् । नदादित्वादीपि हसान्तत्वादापि च पुंवद्भावः । द्विपदोऽपत्यं द्वैपदः । वैयाघ्रपद्यः ॥

**टाडकाः ॥** समासे सति ट अ ड क इत्येते प्रत्यया भवन्ति । "टकारस्तत्पुरुषे स्यादकारो द्वन्द्व एव च । डकारश्च बहुव्रीहौ ककारोऽनियमो मतः ॥" **नो वा ॥** नान्तस्य पदस्य टेर्लोपो वा भवति यकारे स्वरे परे । वाग्रहणात्क्वचिन्न भवत्युपधालोपश्च । अह्नो मध्यं मध्याह्नः । कवीनां राजा कविराजः । टकारोऽनुबन्ध ईबर्थः । कविराजी । राज्ञां पूः राजपुरम् । वाक् च मनश्च वाङ्मनसम् । दक्षिणस्यां दिशि पन्थाः दक्षिणापथः । अहश्च रात्रिश्च अहोरात्रः । द्वौ च त्रयश्च परिमाणं येषां ते द्वित्राः । पञ्च च षट् च परिमाणं येषां ते पञ्चषाः । बहवो राजानो यस्यां नगर्यां सा बहुराजा नगरी । अत्र टिलोपे कृते ॥ **आबतः स्त्रियाम् ॥** इत्याप् । बहवः कर्तारो यस्य स बहुकर्तृकः ॥

टाडका इति । टश्च अश्च डश्च कश्च ते तथा । एते प्रत्ययाः समासान्ता अव्ययीभावादिभ्यो यथायोग्यं भवन्तीत्यर्थः । अत्रापि वानुकर्षणात्सुसखेत्यादावप्रसङ्गः । नो वा । वोऽन्यस्वरे इत्यतो

यस्वरे यस्य लोप इत्यतो लोपः डिति टेरित्यतष्टेरित्यनुवर्त्य येन विधिस्तदन्तस्येति नान्तस्यैतच्चेतासि कृत्वाह । नान्तस्येतीत्यादि । अह्नो मध्यमिति विग्रहे तत्पुरुषे क्वचिदमाद्यन्तस्य परत्वमिति परत्वे सवर्णदीर्घत्वे मध्याह्न इति स्थिते अप्रत्ययेनान्तत्वात्प्राप्तटिलोपनिवृत्तौ उपधाकारलोपे मध्याह्न इति । पुंस्त्वं लोकात् ॥

**कर्मधारयस्तुल्यार्थे ॥** पदद्वये तुल्यार्थे एकार्थनिष्ठत्वे सति कर्मधारयः समासो भवति । नीलं च तदुत्पलं च नीलोत्पलम् । रक्ता चासौ लता च रक्तलता । पुमांश्चासौ कोकिलश्चेति पुंस्कोकिलः ॥ **पुंसः खपे संयोगान्तलोपो वक्तव्यः ॥ ❀ ॥ नाम्नश्च कृता समासः ॥** प्रादेरुपसर्गस्य नाम्नश्च कृदन्तेन समासस्तत्पुरुषो भवति । अपकृष्टो वादोऽपवादः । कुम्भं करोतीति कुम्भकारः ॥

कर्मधारयस्तुल्यार्थे इति । तुल्यार्थत्वं नाम समानार्थत्वं तच्च प्रायशः पदयोर्दृष्टमिति पदद्वये इत्युक्तम् । तेन नीलाचलघट इत्यादौ बहुपदेऽप्यदोषः । एकार्थनिष्ठत्वे सतीति । भिन्नप्रवृत्तिनिमित्तत्वेऽप्यर्थसमासमहिम्ना एकस्मिन्नर्थे निष्ठा वृत्तिर्यस्येत्यर्थः । अतश्च कुम्भकलशादावनातिप्रसङ्गः । नीलपदं नीलघटादिभ्यो व्यावृत्त्य उत्पलपदं च तामरसादिभ्यो व्यावृत्त्य एकस्मिन्नसितसरोजे वर्तत इति एकार्थनिष्ठत्वम् । नीलपदस्य विशेषणत्वात्पूर्वनिपातः । रक्तलतेत्यत्र समानाधिकरणे लतापदे परे पुंवद्वेति पुंस्त्वातिदेशादापो निवृत्तिः । पुंसः खपे इत्यत्र वक्तव्यत्वेन प्रयोगानुसारित्वात् ख्याधातुवर्जिते अम्प्रत्याहारे परे खपे इत्यनुसन्धेयम् । ततश्च पुङ्ख्यानम् । पुङ्क्षीरमित्यादौ खपेऽपि संयोगान्तलोपः । नाम्न-

श्चेति । प्रादिरुपसर्ग इत्यतो विभक्तिव्यत्ययेन प्रादेरित्यनुवर्त्याह । प्रादेरुपसर्गस्य नाम्नश्चेति । यद्यप्युपसर्गाणामपि नामत्वमस्त्येव तथापि नामाख्यातनिपातोपसर्ग इत्यादौ भिन्नत्वेन निर्देशात्पृथगुक्तिः समाससामान्यस्य समास इति पूर्वोक्तयोगेनैव सिद्धे समास इति विशेषपरम् । स चोत्तरपदार्थप्रधानस्तत्पुरुष इत्यभिप्रेत्योक्तम् । तत्पुरुषो भवतीति । अमादौ तत्पुरुष इत्यतो मण्डूकप्लुतिन्यायेन तत्पुरुष इत्यनुवृत्तिर्वा । चकारादूरीकृत्य स्थलीकृत्येत्याद्यपि । कालो भोक्तुमित्यादौ च न । उच्चैःकृत्य–उच्चैःकृत्वेत्यादौ च नेत्यादि प्रयोगवशाज्ज्ञेयम् ॥

**सहादेः सादिः ॥ समासे सति सहादीनां सादिर्भवति । पुत्रेण सह वर्तत इति सपुत्रः ॥**

सहादेरिति । आदिना समानस्य ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु पिण्डगन्धलोहितकुक्षिवेणीपत्नीपक्षेषु तथा व्रताचरणार्थे । ब्रह्मचारिणि परे यत्प्रत्ययान्ते तीर्थे च सो भवति समानं ज्योतिर्यस्य सः सज्योतिः । सपिण्डः । सब्रह्मचारी । सतीर्थ्य इत्यादि । पुंवद्वेत्यतो वानुवृत्तेः क्वचिन्नित्यम् । क्वचिद्वा । क्वचिच्च नेति व्यवसेयम् । प्रत्ययान्ते उदरे वा । सोदर्यः । समानोदर्यरूपनामगोत्ररूपस्थानवर्णवयोवचनधर्म्मजातीयेषु वेति केचित् । सरूपः । समानरूप इत्यादि । दृग्दृशदृक्षेषु च । सदृक् । सदृशः । सदृक्ष इत्यादयः प्रयोगतो ज्ञेयाः । पुत्रेण सह आगत इति विग्रहे समासे अव्ययत्वात्सहशब्दस्य पूर्वनिपाते सादेशे च सपुत्र इति सिद्धम् ॥

**सहसन्तिरसां सध्रिसमितिरयः ॥ सह अञ्चतीति सध्र्यङ् । सम् अञ्चतीति सम्यङ् । तिरः अञ्चतीति तिर्यङ् ॥**

सहेति । सह अञ्चतीत्यत्र सहस्य सध्र्यादेशः । सम् अञ्चतीत्यत्र समः समिरादेशः । तिरः अञ्चतीत्यत्र तिरसस्तिर्यादेशः । एवं देवानञ्चति विष्वगञ्चति अमुमञ्चतीत्यादिविग्रहे । देवद्रि । विष्वद्रि । अदद्र्याद्यादेशाः । देवद्र्यङ् । विष्वद्र्यङ् । अदद्र्यङ् ॥

कोः कदादिः ॥ कुशब्दस्य कुत्सितेषदर्थयोस्तत्पुरुषे कत् कव का आदेशा भवन्ति । कुत्सितम् अन्नं कदन्नम् । ईषदर्थे का कव कद्भवन्ति । ईषदुष्णं कदुष्णम् । कोष्णम् । कवोष्णम् ॥ कोर्मन्दादेशश्च ॥ मन्दोष्णम् । कुत्सितं लवणं कालवणम् ॥ रथवदयोश्च ॥ कद्रथः । कद्वदः ॥ पुरुषे वा ॥ कुपुरुषः । कापुरुषः ॥ पथ्यक्षयोः[1] ॥ कोः कादेशः स्यात् । कुपथः—कापथः । क्वक्षः—काक्षः ॥ ईषदर्थे च ॥ ईषज्जलं काजलम् । षड्भिः अधिका दश षोडश । षट् दन्ता यस्य षोडन् । षष् दन्त इति स्थिते ॥ दन्तस्य दतृ । ऋ इत् । षस्य उत्वम् । दस्य डः । ऋितो नुम् । षोडन् । षट् प्रकारैः षोढा ॥ सङ्ख्यायाः प्रकारे धा ॥ धस्य ढः ॥ षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च वा भवतीति वक्तव्यम् ॥ ❀ ॥ षोढा । षड्धा[2] ।

---

१ पथ्यक्षयोः परतः ॥

२ षड्धेत्यपि क्वचित् ॥

**बृहच्छब्दस्य सुडागमे तलोपश्च ॥**

बृहतां पतिः बृहस्पतिः । महच्छब्दस्य टेराकारः समानाधिकरणे । महादेवः । महेश्वरः । द्यौश्च भूमिश्च द्यावाभूमी । द्योशब्दस्य द्यावादेशः ॥

**जायाया जम्भावो दम्भावो निपात्यते ॥** दम्पती जम्पती क्वचिज्जायापती ॥

कोरिति । तत्पुरुषे समासे कुशब्दस्य कुत्सार्थे ईषदर्थे च वाच्ये कत् कव का इत्यादेशाः स्युः । अन्नात्रिरथवदाक्षेषु कोः कन्नित्यम् । कवाक्षे पुरुषे पथि । ईषदर्थे च वाच्येऽम्बुन्यग्नावुष्णे काकत्कवाः । कुत्सितमन्नं कदन्नम् । कत्त्रयः । कद्रथः । कद्वदः । काक्षः । कापुरुषः । कापथः । कुपथः । ईषज्जलं काजलम् । काग्निः । कवाग्निः । कोष्णम् । कदुष्णम् । तृणे च जातौ । कत्तृणम् । तत्पुरुषादन्यत्र कुब्रो राजा । षोडन्नित्यादौ षट् दन्ता यस्य षट् च दश च षट्प्रकारेणेति विग्रहे ष्टुत्वम् । सहादित्वात्षषः षो इत्यादेशे निमित्ताभावन्यायस्यानित्यत्वात्ष्टुत्वानिवृत्तिः । पुंवद्वेत्यतो वानुवृत्तेश्च धाप्रत्यये वा । षड्धा । क्वचिदपदान्ते पदान्तताश्रयणात्ष्टुत्वाभावः । तदुक्तम् । षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं धासु वा वक्तव्यमिति बृहतां पतिरिति विग्रहे देवतायां वाच्यायां बृहतः बृहस् आदेशः सस्य विसर्गेऽपि सहादित्वात्सः । एवं चौरे वाच्ये तत्करोतीति तस्करः । महांश्चासावीश्वरश्चेति विग्रहे समानाधिकरणे जातीयदेशीययोश्च परतो महतो महा इत्यादेशः । घासकरविशिष्टेष्वपि । महाघासः । महाकरः । महाविशिष्टः । महामायेत्यादौ महतीशब्दस्यापि द्यौश्च भूमिश्चेति विग्रहे द्योशब्दस्य दिव्शब्दस्य वा द्यावादेशः । एवं जाया च पतिश्चेति विग्रहे जायाया जम्भावदम्भावौ वा । जम्पती । दम्पती । जायापती । सहादेराकृतिगण-

त्वमाह । आकृतिगणोऽयमिति । आकृत्या सिद्धशब्दस्वरूपदर्शनेन तदन्तर्गण्यन्त इत्यन्वर्थसंज्ञातः सिद्धशब्दस्वरूपमुपलभ्यादेशविधानं यस्मिन् स आकृतिगण इत्यर्थः ॥

**अलुक् क्वचित् ॥ क्वचित्समासे कृदन्ते तद्धितेऽपि विभक्तेरलुग्भवति । कृच्छ्रान्मुक्तः । अप्सु योनिरस्येत्यप्सुयोनिः । उरसि लोमानि यस्यासौ उरसिलोमा । हृदि स्पृशतीति हृदिस्पृक् । कण्ठे कालो यस्यासौ कण्ठेकालः । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । वनेचरः । खेचरः ॥**

अलुगिति । समासप्रत्यययोरिति प्राप्तस्यापवादत्वात्कृदन्ते च तत्प्राप्त्यभावात्सरसिजामित्यादौ नाम्नश्च कृता समास इति समासे एव प्राप्तलुक्प्रतिषेधात्कृदन्ते इत्यसभ्यः पाठः । तद्धिते अमुष्यापत्यम् आमुष्यायणः ॥

**समानाधिकरणे शाकपार्थिवादीनां मध्यमपदलोपो वक्तव्यः ॥ * ॥ शाकः प्रियो यस्य सः । शाकप्रियश्चासौ पार्थिवश्च शाकपार्थिवः ॥**

सनामाधिकरणे शाकपार्थिवादीनामिति । पार्थिवादौ समानाधिकरणे पूर्वपदस्य यदुत्तरपदं तस्य लोप इत्यर्थः । शाकः प्रियो यस्य स शाकप्रियः । देवान् पूजयतीति देवपूजक इत्यत्रोत्तरपदयोः प्रियपूजकपदयोर्लोपः । मध्यमपदलोप इति पाठे समुदायापेक्षया मध्ये वर्तमानस्येत्यर्थः । आकृतिगणोऽयम् ॥

**आदेश्च द्वन्द्वे ॥ द्वन्द्वे समासे पूर्वपदस्य लोपो**

भवति। चकारग्रहणाद्विकल्पेन। माता च पिता च पितरौ। शिष्यमाणो लुप्यमानार्थाभिधायी। श्वश्रूश्च श्वशुरश्च श्वशुरौ। दुहिता च पुत्रश्च पुत्रौ॥

आदेश्चेति। द्वन्द्वे समासे आदेरादिभूतस्य पदस्य लोपो वाच्यः वक्तव्ये तु प्रयोगान्तर इति प्रयोगतो व्यवस्था॥

ऋतां द्वन्द्वे॥ द्वन्द्वे समासे पूर्वपदस्य ऋकारस्य वाकारो भवति। माता च पिता च मातापितरौ॥ द्वन्द्वेऽसर्वादित्वं वा॥ द्वन्द्वे समासे सर्वादित्वं वा भवति। वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतरे—वर्णाश्रमेतराः॥

ऋतां द्वन्द्वे इति। विद्यायोनिसंबन्धवाचिनामृकारान्तानां पुत्रे च परे पूर्वपदान्तस्याकारो वक्तव्य इत्यर्थः। माता च पिता चेति विग्रहे समासे "एभ्यो माता गरीयसी" इत्यादिवचनान्मातुः प्रधानत्वात्पूर्वनिपाते आकारादेशः। एवं होतापोतारौ पितापुत्रौ इत्यादि। अन्यत्र कर्तृभोक्तारौ। द्वन्द्वे इति। असर्वादित्वमिति च्छेदः। ततश्च द्वन्द्वसमासे सर्वादित्वं न भवति। वा इति। जसीति शेषः। वाशब्दादेव जसि वा नान्यत्र। वर्णाश्च आश्रमाश्च इतरे चेति विग्रहः॥

वैयधिकरण्ये बहुव्रीहौ मध्यमपदलोपश्च वक्तव्यः॥*॥ कुमुदस्य गन्ध इव गन्धो यस्य स कुमुदगन्धिः॥ उपमानाच्च॥ उपमानात्परस्य गन्धशब्दस्याकारस्येकारो भवति। हंसस्य गमनमिव गमनं यस्याः सा हंसगमना॥

वैयधिकरण्य इति । भिन्नविभक्त्यन्तपदवाच्यत्वं वैयधिकरण्यम् । गन्धपदस्य मध्यवर्तिनो लोपे इवेत्यस्योक्तार्थत्वादप्रयोगः । चकाराद्गन्धशब्दस्येकारान्तादेशः । चकारादेव निर्गतास्त्रिंशदङ्गुलयो यस्मात्स निस्त्रिंशः खड्गः । इत्यत्राङ्गुलिपदस्योत्तरस्यापि लोपः ॥

**दिक्सङ्ख्ये संज्ञायाम्** ॥ दिग्वाचकसङ्ख्यावाचकशब्दौ संज्ञायां विषये परपदतुल्यार्थे समस्येते स समासस्तत्पुरुषो भवति ॥ **अविग्रहो नित्यसमासः । अन्यस्त्वस्वपदविग्रहोऽपि** ॥ दक्षिणाग्निः । सप्तग्रामाः ॥ इति समासप्रक्रिया ॥

दिक्सङ्ख्ये इति । दिग्वाचकसङ्ख्यावाचकशब्दावित्यर्थः । संज्ञायामित्यनेन नित्यसमाससूचनात्तल्लक्षणमाह । अविग्रह इति । दक्षिणाग्निरित्यादौ विग्रहशून्य एको नित्यसमासः । अधिस्त्रीत्यादावस्वपदविग्रहः समस्यमानपदान्यपदविग्रहः । अन्यो नित्यसमास इति नित्यसमासो द्विधेत्यर्थः ॥

इति सारस्वतप्रसादे समाससङ्क्षेपः समाप्तः ।

## अथ तद्धितो निरूप्यते ।

**अपत्येऽण्** ॥ नाम्नोऽपत्येऽर्थेऽण्प्रत्ययो भवति । उपगोरपत्यमिति वाक्ये उपगोः अण् इति स्थिते॥**समासप्रत्यययोः**॥ इति षष्ठीलोपः। णकारो वृद्ध्यर्थः ॥

समासश्चान्वये नाम्नामित्यत्र चशब्दात्तद्धितस्याप्यन्वययोग्यत्वे एव संसूचनात्समाससमाप्ताववसरसङ्गत्या तद्धितप्रत्ययान्निरूपयि-

तुमुपक्रमते । अथेति । तद्धित इति जात्यभिप्रायेणैकवचनम् । तेभ्यः पूर्वोक्तेभ्यः नामपदेभ्योऽर्थान्तरप्रतिपादनशक्तिप्रदत्वेन हितोऽनुकूलस्तद्धित इत्यन्वर्थसंज्ञाविज्ञानात्तद्धितसंज्ञा णादीनामिति भावः । अपत्येऽण् । नाम्न इति नामप्रकरणत्वात् । अत्रापि पूर्ववन्नामशब्देन पदं प्रोच्यते । वाक्ये औपगव इति तद्धितार्थबोधके इति शेषः । अपत्यार्थस्याण् उक्तार्थत्वादुक्तार्थानामित्यभिप्रेत्य पदाप्रयोगः ॥

**आदिस्वरस्य ञ्णिति च वृद्धिः॥ स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति ञिति णिति च तद्धिते परतः । उकारस्य औकारो वृद्धिः॥**

आदिस्वरस्य इति । आदौ स्वरः आदिस्वरः । आदित्वं च स्वरापेक्षयेत्यभिप्रेत्योक्तं स्वराणां मध्ये इत्यादि । ततश्च वासिष्ठ इत्यादौ वृद्धिः । तदपि संभवदभिप्रायम् । ततश्च एः कामस्यापत्यमाय इत्यादावाद्यन्तवदेकस्मिन्निति आदित्वाद्भवत्येव वृद्धिः एतदपि संभवदभिप्रायम् । ञ् च ण् च ञ्णौ ञ्णावितौ यस्य स ञ्णित् तस्मिन् तद्धिते परत इति तद्धितप्रकरणत्वात् उकारौकारयोः स्थानादीनां तरतमत्वादौकारो वृद्धिरित्यर्थः ॥

**वोऽव्यस्वरे ॥ उकारस्यौकारस्य च अव् भवति यकारे स्वरे । औपगवः । वासिष्ठः । गौतमः ॥ शिवादिभ्यश्चेति वक्तव्यः ॥ शैवः । वैदेहः ॥**

वोऽव्यस्वरे इति । उश्च ओश्च वो इति साङ्केतिकं षष्ठीद्विवचनान्तम् । यश्च स्वरश्चेति समाहारः एतत्तद्धितप्रकरणत्वात्तद्धिते एवेति गोयानमित्यादावनतिप्रसङ्गः । ओकारस्य स्वरे अविति सिद्धेऽपि यकारे विधानार्थं वचनम् । यद्यपि क्वचित्स्वरवद्यकार इति

स्वरत्वातिदेशाद्यकारेऽपि अवू संभवति तथापि सूत्रस्य वक्तव्यानुपजीवित्वादौकारोक्तिर्युक्तैव । नामसंज्ञायां स्याद्युत्पत्तौ देववद्रूपं नेयम् । वसिष्ठस्यापत्यं गौतमस्यापत्यमिति विग्रहे । ऋषिवाचकत्वादिञभावे अण् । यस्य लोप इति लोपः ॥

**ऋ उरणि ॥ ऋकारस्य उर् भवति अणि परे ॥**

**षषो णो मातरि ॥ षाण्मातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः ॥**

ऋ उरिति । षण्णां मातॄणामपत्यमिति विग्रहे अणि सङ्ख्यापूर्वकत्वात्तद्धितार्थविषयत्वाच्च द्विगुसमासे विभक्तिलोपे पदान्तत्वमाश्रित्य षोड इति डत्वे मृन्मयं दृषन्मयमित्यादाविव ञमे ञमा वेत्यत्र चपा अबे जबा इत्यतो जबा इत्यनुवृत्तेः । क्वचिज्जबा ञमे परे ञमा भवन्तीति जबस्य डकारस्य सवर्णत्वात् ञमे ञमो णकारः । केचित्तु नामि लुप्तेऽपि प्रत्ययलक्षणन्यायेनैतदाश्रितौ ड इति णकारः इत्याहुः । अन्ये तु हसेर्हस इति षस्य द्वित्वे खसपरत्वेन पूर्वषस्य षोड इति डत्वे खसे चपा इति चपे टकारे संयोगान्तलोपे च निमित्ताभावन्यायस्यानित्यत्वात् ञमे ञमा वेति टस्य ण इत्याहुः ॥

**अत इञनृषेः ॥ अकारान्तान्नाम्नोऽनृषिशब्दादपत्येऽर्थे इञ् प्रत्ययो भवति । यस्य लोपः । देवदत्तस्यापत्यं दैवदत्तिः । श्रीधरस्यापत्यं श्रैधरिः । दशरथस्यापत्यं दाशरथिः। पुरन्दरस्यापत्यं पौरन्दरिः॥ बह्वादिभ्यश्च ॥ औपगविः । कार्ष्णिः । औडुलोमिः । आग्निशर्मिः ॥**

अत इञिति । अत इञ् इति योगविभागात् वैदिर्गार्गिरौद्दालिकिरित्यादावृषिवाचकेभ्योऽपीञ् । वा टाङ्चोरित्यतो मण्डूकप्लु-

त्या वानुवृत्तेर्व्यवस्थया शिवादिभ्योऽनृषिवाचिभ्योऽकारान्तेभ्योऽपीञ् । शिवस्यापत्यं शैवः । श्वाफल्कः । रान्धसः । वृष्णिभ्यश्च । वासुदेवः। आनिरुद्धः । कुरुभ्योऽपि । नाकुलः । साहदेवः । वाशब्दादेव लोकाद्वा । बह्वादिभ्योऽनकारान्तेभ्योऽपीञ् । बाहविः । औपगविः। औडुलोमिः। आग्निशर्मिः । नान्तेभ्यो नो वेति टिलोपः । एवं सुधातृव्यासवरुडनिषादचण्डालबिम्बानामिञि अकङादेशः । सौधातकिः । वैयासकिः । वारुडकिरित्यादि प्रयोगाद्बूह्यम् ॥

**ण्यायनणेयणणीया गर्गनडात्रिस्त्रीपितृष्वस्रादेश्च** ॥ गर्गादेर्नडादेरत्र्यादेः स्त्रीपितृष्वस्रादेश्च ण्य आयनण् एयण् णीय इत्येते प्रत्यया भवन्ति अपत्येऽर्थे । गर्गस्यापत्यं गार्ग्यः । वत्सस्यापत्यं वात्स्यः । नडस्यापत्यं नाडायनः। चरस्यापत्यं चारायणः।अत्रेरपत्यम् आत्रेयः। गङ्गाया अपत्यं गाङ्गेयः । मह्या अपत्यं माहेयः। कपेरपत्यं कापेयः । पैतृष्वसेयः । मातृष्वसेयः॥ **अलुक् क्वचित्**॥अमुष्यापत्यम् आमुष्यायणः॥ **मातृपितृभ्यां स्वसुः सस्य षत्वं वक्तव्यम्** ॥ ❀ ॥ मातृष्वस्रीयः । पैतृष्वस्रीयः ॥ **पितृमातृभ्यां व्यडुलौ** ॥ पितुर्भ्राता पितृव्यः।मातुर्भ्राता मातुलः॥ **पितुर्डामहन्**॥ पितुः पिता पितामहः । मातुः पिता मातामहः। पितुर्माता पितामही । मातुर्माता मातामही ॥

ण्यायनणिति । ण्यश्च आयनण् च एयण् णीयश्च ते तथा । गर्गश्च नडश्च अत्रिश्च स्त्री च पितृष्वसा च ता आदौ यस्य स तथा द्वन्द्वान्तत्वादादिशब्दस्य प्रत्येकं संबन्ध इत्यभिप्रेत्याह । गर्गादेरित्यादि । गर्गादेर्गणाण्ण्यः । नडादेर्गणादायनण् । अत्र्यादेर्गणात्स्त्रीलिङ्गाच्च एयण् । पितृष्वस्रादेर्गणाण्णीयः । एयण् च । वाशब्दानुवृत्तेस्तस्य ङित्त्वाट्टिलोपो वा पैतृष्वसेयः मातृष्वसेय इति विवेकः।स्त्रीलिङ्गादिति स्त्रीप्रत्ययान्तोपलक्षणम् । अत एव भूमेरपत्यं भौम इत्यादावप्रसङ्गः ॥

**लुग्बहुत्वे क्वचित्** ॥ अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचिदृष्यनृषिविषये लुग्भवति । गर्गाः । वसिष्ठाः । अत्रयः । विदेहाः ॥

**देवतेदमर्थे** ॥ देवतार्थे इदमर्थे चोक्ताः प्रत्यया भवन्ति । इन्द्रो देवतास्येति ऐन्द्रं हविः । सोमो देवतास्येति सौम्यम् । देवदत्तस्य इदं दैवदत्तं वस्त्रम् ॥

लुग्बहुत्वे क्वचिदिति । गर्गयस्कविदादिभृग्वत्रिकुत्साङ्गिरोवसिष्ठगौतमदेशतुल्यक्षात्रियेभ्यः परस्य प्रत्ययस्य बहुत्वविषये लुग्भवतीत्यर्थः । देवते इति । देवता च इदं च देवतेदमौ देवतेदमोरर्थः देवतेदमर्थस्तस्मिन् उक्ता अणादयो यथायोग्या भवन्तीत्यर्थः ॥

**क्वचिद्द्वयोः** ॥ पूर्वपदोत्तरपदाद्योः क्वचिद्वृद्धिर्भवति । अग्निमरुतौ देवते अस्येति आग्निमारुतं कर्म । सुहृदो भावः सौहार्दम् ॥ अत्र भावेऽणवक्तव्यः ॥ ❀ ॥

क्वचिदिति । आदिस्वरस्येत्यत्र पदापेक्षया आदित्वेऽविशेषाद्द्वयोः पूर्वपदादेः उत्तरपदादेश्च वृद्धिर्भवतीत्यर्थः । अग्निमरुतौ देवते अस्य तत् आग्निमारुतम् । कर्मेति विशेष्यपदम् । सुहृदो भावः सुभगस्य भाव इति विग्रहे भावार्थे प्रत्ययानभिधानादत्र भावे अण् वक्तव्य इति वक्तव्यत्वात्स्वार्थेऽपीत्यपिशब्दादनुक्तसमुच्चयार्थाद्वा विकाराभावसमूहादावणि सिद्धेरत्रापि तेनैव वक्तव्यो व्याख्येयः । सौभाग्यमित्यत्र भावे तत्वयण इति यण् । यदि तु भावे यण् वक्तव्य इति पाठस्तदा भावे तत्वयण इत्येव यण्सिद्धेः तेनैव वक्तव्यो व्याख्येयः ॥

**णितो वा ॥** उक्ताः प्रत्यया विषयान्तरे णितो वा भवन्ति । अजो गौर्यस्य स अजगुस्तस्येदं धनुः आजगवम्-अजगवं वा । कुमुदस्य गन्ध इव गन्धो यस्य स कुमुदगन्धिः तस्यापत्यं स्त्री कौमुदगन्ध्या । श्वशुरस्यायं श्वाशुर्यो ग्रामः । विष्णोरिदं वैष्णवम् । गोरिदं गव्यम् । कुलस्य इदं कुल्यम् ॥ **त्वन्मदेकत्वे ॥** तव इदं त्वदीयम् । मम इदं मदीयम् ॥

णित इति । प्राक् उक्ता अणादयः प्रत्यया विषयान्तरे मुख्यविषयादपत्यादिरूपादन्यस्मिन् विषये इदमर्थादौ णितो णित्कार्यकृतो वा भवन्तीत्यर्थः । अयं च णित्वातिदेशो णितोऽणितोऽपि व्यवस्थितः । विकल्पेन णित्वतदभावार्थः । अजगुशब्दादिदमर्थेऽणि णित्त्वविकल्पाद्वृद्धिविकल्पः । " धनुर्वेदन्त्याजगवं पिनाकिकरगोचरम् । " इति कात्यायनमते नित्यम् । अमरसिंहमते तु " पिनाकोऽजगवं धनुः " इत्युक्तेर्नेति विकल्पः । विषयान्तर इत्यस्य प्रत्युदाहरणम् । कौमुदगन्ध्येति तत्र वैयधिकरण्ये बहु-

व्रीहौ मध्यमपदलोपश्चेति बहुव्रीहौ मध्यमपदलोपे च चकाराद्गन्धशब्दस्येकारान्तादेशे कुमुदगन्धिशब्दादपत्यार्थे गर्गादित्वात् ण्यप्रत्यये विषयान्तरत्वाभावाण्णित्त्वविकल्पाभावः । स्त्रीत्वादाप् । क्वचित् कुमुदगन्ध्येति । णित्वाभावोदाहरणमप्यस्ति । तच्चिन्त्यम् । विषयान्तरत्वाभावात् । श्वाशुर्यः वैष्णवमित्यत्र नित्यं णित्वम् । गव्यमित्यादौ च न ॥

**चतुरश्चलोपः ॥** चतुरशब्दस्य चकारस्य लोपो भवति ण्यणीययोः परतः । तुर्यः—तुरीयः ॥ **अन्यस्य दक् ॥** अन्यशब्दस्य दगागमो भवति णीयप्रत्यये परे । अन्यस्य इदम् अन्यदीयम् । अर्द्धजरत्या इदम् अर्द्धजरतीयम् ॥

चतुरश्चलोप इति । चतुरशब्दस्य यश्चकारस्तस्येत्यर्थः । ण्यणीययोः परतो लोपो वक्तव्य इत्यर्थः । चतुर्णां सङ्ख्यापूरण इति विग्रहे स्वार्थेऽपीत्यपिशब्दात्पूरणार्थे ण्यणीयौ तयोश्च णित्वाभावादादिवृद्ध्यभावः । अन्यस्य दगिति । अन्यशब्दाण्णीये दगागमो वक्तव्यः । स्त्रीत्वादन्ते । अन्यस्येदमिति विग्रहः ॥

**कारकात्क्रियायुक्ते ॥** कारकादप्येते प्रत्यया भवन्ति क्रियायुक्ते कर्तरि कर्मणि चाभिधेये ॥ कुङ्कुमेन रक्तं वस्त्रं कौङ्कुमम् । मथुराया आगतो माथुरः । ग्रामे भवो ग्राम्यः । धुरं वहतीति धुर्यः—धौरेयः ॥

कारकादिति । क्रिया धात्वर्थस्तद्युक्तस्तदाश्रयः । स च क्वचित्कर्ता । क्वचिच्च कर्म । यथा देवदत्तो ग्रामं गच्छतीत्यत्र गमनक्रियाश्रयो देवदत्तः । देवदत्त ओदनं पचतीत्यादौ च विक्लित्ति-

रूपायाः पचनक्रियाया आश्रयः कर्मभूतौदन इत्यभिप्रेत्य कर्तरि कर्मणि चाभिधेये इत्युक्तम् । यत्क्रियायुक्ते कर्तृकर्मणी तत्क्रिया-कारकादणादयो भवन्ति । तद्धितान्तस्य चैते एव वाच्ये भवेता-मित्यर्थः । कौङ्कुममित्यत्र रञ्जनक्रियायाः करणकारणात् कुङ्कुमा-द्रञ्जनक्रियायुक्ते वस्त्रेऽभिधेयेऽण् । धुरीमिति कर्मकारकाद्वहनक्रिया-युक्ते कर्तर्यनडुहि वाच्ये ण्य एयण् । णितो वेति व्यवस्थितो णित्वाभावादादिवृद्ध्यभावः । एयणश्च णित्त्वाद्वृद्धिः णितो वेत्य-नन्तरसूत्रतो वानुवृत्तेर्व्यवस्थयाऽर्थविशेप एव न भिन्नः शरेण रामेणेत्यादौ ॥

**केनेयेकाः** ॥ क इन इय इक इत्येते प्रत्यया भवन्ति भवाद्यर्थेषु । णित्त्वं चैषां वैकल्पिकम् । कर्णाटे भवः कार्णाटकः कर्णाटको वा । ग्रामादा-गतस्तत्र जातो वा ग्रामीणः—ग्राम्यः । सध्रीचि भवः सध्रीचीनः। समीचि भवः समीचीनः। तिर-श्चि भवः तिरश्चीनः ॥

केनेति । कश्च इनश्च इयश्च इकश्च ते तथा । णित्त्वं चैषां वैक-ल्पिकमिति । णितो वेत्यस्यात्रानुवृत्तेरिति भावः । सध्र्यङ्ङेव सध्री-चीनः । सम्यगेव समीचीनः। स्वार्थे ईनप्रत्यये । तद्धिते परे अश्चे-र्दीर्घश्चेत्यकारलोपपूर्वेकारदीर्घौ । तिरश्चीन इत्यत्र तिरश्चादय इति तिरश्चनिपातः ॥

**यलोपश्च** ॥ क्वचिद्यकारलोपो भवति । कन्या-याः जातः कानीनः ॥ **नक्षत्रादण् वक्त-व्यः** ॥ ❋ ॥ पुष्येण युक्ता पौर्णमासी पौषी । पौष्यां भवः पौषीणः ॥ **इयो वा** ॥ क्षतात्त्रायते

इति क्षत्रम्। क्षत्रे भवः क्षत्रियः—क्षात्रः । शुक्राज्जातं शुक्रियम् । इन्द्राज्जातम् इन्द्रियम्। अक्षैर्दीव्यतीति आक्षिकः । शब्दं करोतीति शाब्दिकः। तर्कं करोतीति तार्किकः। वेदे जाता वैदिकी स्तुतिः ऋग्वा ॥

यलोपश्चेति । क्वचित्तद्धिते परे यकारस्य लोपो वक्तव्य इत्यर्थः । कन्यायां भव इति विग्रहे ईनः । यस्य लोप इत्यकारलोपः। आदिवृद्धिः । पुष्ये भवः पौषीणः । इयो वेति क्षत्रशब्दाज्जातावेवेयः । क्षत्रं जातिः । क्षत्रियः । क्षात्रोऽन्यः । अक्षैर्दीव्यति शब्दान् करोति तर्कमधीते वेद वेत्यादि विग्रहाः। वैदिकीत्यत्र तदादित्वादीप्॥

**किमादेस्त्यतनौ** ॥ किमादेरद्यादेर्भवाद्यर्थेषु त्यतनौ प्रत्ययौ भवतः। कुत्र भवः कुत्रत्यः—कुतस्त्यः । अद्य भवः अद्यतनः । ह्यो भवः ह्यस्तनः । श्वो भवः श्वस्तनः । सदा भवः सदातनः ॥ **दक्षिणापश्चात्पुरसस्त्यण् वक्तव्यः** ॥ ❀ ॥ दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ॥ **स्वार्थेऽपि** ॥ उक्ताः प्रत्ययाः स्वार्थेऽपि भवन्ति । देवदत्त एव दैवदत्तकः । चत्वार एव वर्णाश्चातुर्वर्ण्यम् । चोर एव चौरः ॥ **भागरूपनामभ्यो धेयः** ॥ भागधेयम् । रूपधेयम्। नामधेयम् ॥

किमादेस्त्यतनाविति । किमादेरिति किम्शब्द आदिः

आद्यवयवो यस्य तत्प्रकारकाङ्गणात् त्यः। स च अमाइहक्कतासिकुत्रे-भ्यः। अमात्यः। इहत्यः। क्वत्यः। कुतस्त्यः। कुत्रत्यः इत्यादि। एव-मैषमस्ह्यस्श्वसस्त्यः। ऐषमस्त्यः। ह्यस्त्यः। श्वस्त्यः। तथा परुत्परारिचिरात् त्नः। परुत्नम्। परारित्नम्। चिरत्नम्। दक्षि-णापश्चात्पुरसस्त्यण्। तस्य च णितो वेति णित्त्वम्। दक्षिणस्यां भावी दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः इत्याद्यूह्यम्। स्वार्थेऽ-पीति। अपिशब्दोऽनुक्तसमुच्चयार्थस्ततश्चेष्टसिद्धिः। चत्वार एव वर्णा इति विग्रहे कर्मधारये चतुर्वर्णशब्दात्स्वार्थे ण्यः॥

**अणीनयोर्युष्मदस्मदोस्तवकादिः॥ आदेशा भवन्ति। तव इदं तावकम्। मम इदं मामकम्। तावकीनः। मामकीनः। यौष्माकः। आस्माकः। यौष्माकीणः। आस्माकीनः॥**

अणीययोरिति। अण् च ईनश्च अणीनौ तयोः परतः युष्मदस्मदोस्तवकादिः। एकत्वे तवकममकौ। द्वित्वबहुत्वयोर्युष्माकास्माकौ च वक्तव्यावित्यर्थः। अनेकवर्णत्वेन गुरुत्वाद्गुरुः। शि-त्वेति सर्वादेशः॥

**वत्तुल्ये॥ तुल्ये सादृश्येऽर्थे वत्प्रत्ययो भवति। चन्द्रेण तुल्यं चन्द्रवत् मुखम्। घटेन तुल्यं घटवत् उदरम्। पटवत् कम्बलम्॥**

वदिति। तृतीयान्तात् क्रियातुल्य इति व्याख्येयम्। तेन पुत्रेण तुल्यः स्थूलः गोमान्वा इत्यादौ गुणद्रव्यतुल्ये न। केचित्तु तुल्य इति सामान्योक्तेर्विवक्षितार्थप्रयोगदर्शनात्पुत्रतुल्यस्थूल इत्यादावपि अस्तीत्यादिक्रियाध्याहाराद्गिरिवद्गज इत्यादाविव वत्प्रत्ययेऽप्यदोषात्तृतीयान्तात्क्रियातुल्य इत्यादिविवक्षा नेति। चन्द्र इव घट इव पदस्येवेति प्रथमासप्तमीषष्ठ्यन्तादपि वदित्याहुः॥

**भावे तत्वयणः ॥** शब्दस्य प्रवृत्तिनिमित्तं भावस्तस्मिन् भावे त त्व यण् इत्येते प्रत्यया भवन्ति । ब्राह्मणस्य भावो ब्राह्मणता । त्वयणौ नपुंसकलिङ्गौ भवतः । ब्राह्मणत्वम् । ब्राह्मण्यम् । सुमनसो भावः सौमनस्यम् । सुभगस्य भावः सौभाग्यम् । विदुषो भावः वैदुष्यम् ॥

**भाव इति** । तश्च त्वश्च यण् च ते तथा । भवत्यस्माच्छब्दप्रवृत्तिरिति भावशब्दस्यान्वर्थतामभिप्रेत्याह । शब्दस्य प्रवृत्तिनिमित्तं भाव इति । तच्च " चतुष्टयीशब्दानां प्रवृत्तिः " इति महाभाष्यानुसारात् द्रव्यगुणक्रियाजातिरूपा । केचित्तु द्रव्यगुणक्रियाजातिरूढयः शब्दहेतव इत्याहुः । ब्राह्मणतेत्यत्र ब्राह्मणशब्दप्रवृत्तिनिमित्तं जातिः । समाहारे ता चेत्याबन्तनिर्देशान्तान्तस्य नित्यस्त्रीत्वसूचनादाप् ॥

**समाहारे ता च गुणश्च ॥** त्रयाणां समाहारः त्रेता । जनानां समूहो जनता । देवता ॥

**समाहारे ता चेति** । चकारादनुक्तसमुच्चयार्थात् । हस्तिनां समूहो हास्तिकम् । धैनुकमित्यादौ । समूहे कः । तस्य च णितो वेति णित्त्वादादिवृद्धिः । तथा अपूपानां समूह आपूपिकम् । शाष्कुलिकमित्यादावन्नवाचकेभ्यः कण् । एवं कवचिनां समूहः कावचिकम् । केदाराणां समूहः केदारिकम्—कैदारकम् । कैदार्यमित्यत्र इककण्याः । तथा भिक्षादिभ्योऽण् । भिक्षाणां समूहो भैक्षम् । यौवनम् । तथा पाशादिभ्यो यत् । पाशानां समूहः पाश्या । वात्या । खल्या । गव्या । रथ्या । वातादूलः । वातूलः । तथा खलिनो गोत्ररथेभ्य इनित्रकट्यचेत्यादयः । खलानां समूहः खलिनी गोत्रा । रथकट्येत्यादयः प्रयोगतो ज्ञेयाः । स्त्रीत्वादिकं लोकात् । गुणश्चेति विशेषार्थश्चकारात्त्रिशब्दस्यैव गुणः ॥

**कर्मण्यपि यण् वक्तव्यः ॥ * ॥ ब्राह्मणस्य कर्म ब्राह्मण्यम् । राज्ञ इदं कर्म राज्यम्-राजन्यम् ॥**

कर्मण्यपीति । अपिशब्दात्साध्वर्थेऽपि । सामसु साधुः सामन्यः । कर्मण्यः । नो वेति शब्दव्यवस्थया टिलोपप्रसङ्गः । नाम्नो नो लोपशधावित्यत्रापि ह्रस्वो वेत्यतो वानुकर्षणाद्व्यवस्थयात्र तदभावः । एवं सभायां साधुः सभ्यः । समाने तीर्थे वासी सतीर्थ्यः । सहादेरिति समानस्य सः । समाने उदरे शयितः समानोदर्यः-सोदर्यः । विकल्पेन सादेशः । अग्रादिभ्य ईयेययतो वार्थे । अग्रे भवः अग्रीयः-अग्रियः-अग्र्यः । तथा हितार्थे शरीरावयवाद्यत् । दन्तेभ्यो हितं दन्त्यम् । कण्ठ्यम् । ओष्ठ्यमित्यादि । शतेन क्रीतः शत्यः इत्यादि प्रयोगानुसारेणोह्यम् । णितो वेति णित्त्वव्यवस्था ॥

**लोहितादेर्डिमन् ॥ लोहितादेर्भावेऽर्थे इमन् प्रत्ययो भवति स च डित् । डित्त्वाट्टिलोपः । लोहितिमा । अणोर्भावोऽणिमा । लघोर्भावो लघिमा । महतो भावो महिमा ॥**

लोहितादेरिति । भावे तत्वयण इत्यनुवृत्तेस्तेऽपि । ततश्च लोहितता-लोहितत्वम्-लौहित्यमित्याद्यपि ॥

**ऋ र इमनि ॥ ऋकारस्य रेफो भवति इमनि परे । प्रथिमा । द्रढिमा ॥**

ऋ र इति । वक्तव्यत्वेन प्रयोगानुसारित्वाद्धसादेर्लघोरित्येव नेह । ऋजिमा । कृष्णिमा ॥

**बहोर्भाव इति विग्रहे ॥ बहोर्लोपो भूश्च**

**बह्वोः ॥ बह्वोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति । बह्वोः स्थाने भूश्चादेशः । बह्वो-र्भावो भूमा ॥**

बह्वोरिति । इमनादीनामित्यादिशब्देनेष्ठेयसोर्ग्रहणम् । पुनर्ब-ह्वोरिति स्थानिनियमार्थम् । अन्यथा इमन्नादीनां प्रकृतत्वात्तेषा-मेव स्यात् । यद्यपि तेषामिकारलोपसामर्थ्यान्न संभवति । तथापि पूर्वस्य पञ्चम्यन्तत्वेन स्थानषष्ठ्यन्तस्य पृथगुक्तिर्युक्तैव । अत एवादेः परस्येति परिभाषया परलोपप्रसक्तौ संभवदभिप्रायेणेका-रस्योक्तिः । ततश्चेयानित्यादौ इकारस्यापि लोपः ॥

**अस्त्यर्थे मतुः ॥ नाम्नो मतुः प्रत्ययो भवति अस्यास्मिन्नस्तीत्येतस्मिन्नर्थे । उकारो नुम्वि-धानार्थः ॥ उगितो नुम् ॥ गोमान् । श्रीमान् । गोमती । श्रीमती । आयुष्मान् ॥**

अस्त्यर्थे इति । अस्तेरर्थोऽस्त्यर्थो विद्यमानार्थस्तस्मिन्नाम इति प्रथमान्तपरम् । ततश्च प्रथमान्तान्नाम्नोऽस्त्युपाधिकान्मतुरि-त्यर्थः । अस्यास्मिन्वास्तीत्यर्थः । विशेषस्तु वानुवृत्तेरवसेयः । गौः श्रीश्चास्यास्मिन्वेति विग्रहे उकारानुबन्धित्वात् उगित इतीप् । " भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ " क्रमेण । ब्राह्मणवान् ग्रामः । उदरिणी कन्या । रूपवान्नटः । क्षीरिणो वृक्षाः । विद्यावान्नरः । दण्डी । अस्त्यर्थोदाहरणं चोक्तम् ॥

**अइकौ च मत्वर्थे ॥ मत्वर्थे अइकौ प्रत्ययौ भवतः । वैजयन्ती पताका अस्य अस्मिन् वा**

---

१ उदाहरणानीत्यध्याहार्यम् ॥

**वैजयन्तः प्रासादः। माया विद्यते अस्यास्मिन्मायिकः॥**

अइकाविति। अश्च इकश्च अइकौ सन्ध्यभावोऽसन्देहार्थः। एवं प्रज्ञास्यास्ति प्राज्ञः। श्राद्धः। आर्थः। वृत्तिरस्यास्ति वार्त्त इत्यादौ णितो वेति व्यवस्थया णित्त्वम्। चकारादनुक्तसमुच्चयार्थात्प्रयोगानुसारेणान्येभ्योऽपि। यथा फलबर्हस्थेभ्य इनः। फलमस्यास्तीति फलिनः। बर्हिणः। रथिनः। तथा बलवाताभ्यामूलः। बलमस्यास्ति बलूलः। वातूलः। तथा वातातीसाराभ्यां किन् रोगे। वातो रोगोऽस्यास्तीति वातकी। अतीसारकी। तथा कंशंभ्यां बभादयः। कं शं वास्यास्तीति। कम्बः। शम्बः। कम्भः। शम्भः कंयुः। शंयुः। कन्तिः। शन्तिः। कन्तुः। शन्तुः। कन्तः। शन्तः। तथा तुन्दिबलिवटिभ्यो भः। तुन्दिनो विद्यन्तेऽस्मिन् तुन्दिभः। बलिभः। वटिभः। कृष्यादिभ्यो वलः। पूर्वस्य च दीर्घः। कृषीवलः। रजस्वला दन्तावलशिखावलौ संज्ञायाम्। अन्यत्र दन्तवान् शिखावान्। तथा मध्वादे रः। मधुरः। ऊषः क्षारमृत्तिकाऽस्यास्ति ऊषरः। शुषिरः। मुष्करः। खमुखकुञ्जेभ्यश्च। खरः। मुखरः। कुञ्जो हस्तिहनुः सोऽस्यास्ति कुञ्जरः। कच्छूः कण्डूः सास्यास्तीति कच्छुरः। अस्य ह्रस्वत्वम्। अर्णसो वः सलोपश्च। अर्णांसि जलान्यस्मिन्नर्णवः। केशादिभ्योऽपि प्राशस्त्ये। प्रशस्ताः केशाः सन्त्यस्य केशवः। तथा काण्डाण्डयोरीरः। काण्डीरः। आण्डीरः। मेधारथाभ्यामिरः। मेधिरः। रथिरः। तथा लोमादिभ्यः शः। लोमशः। रोमशः। पामादेर्नः। पामनः। प्रशस्तान्यङ्गानि सन्त्यस्या अङ्गना। सिध्मादेर्लः। सिध्मलः। चण्डालः इत्यादयो यथाप्रयोगमूह्याः॥

**मान्तोपधाद्वत्विनौ॥ मकारान्तान्मकारोपधादकारान्तादकारोपधाच्च वत्विनौ प्रत्ययौ**

भवतः अस्त्यर्थे । किंवान् । लक्ष्मीवान् । भगवान् । धनी । दण्डी । छत्री । दृषद्वती । भूमी । शमी । कामी ॥ तडिदादिभ्यश्च ॥ तडित्वान् । विद्युत्वान् । मरुत्वान् ॥

मान्तोपधादिति । मश्च अश्च मौ मौ अन्ते उपधायां च यस्येति व्यधिकरणबहुव्रीहिः । वतुप्रत्ययः सामान्येन भवति इन्प्रत्ययस्त्वकारान्तादेवेति विवेकः । दृषद्वानित्यवर्णोपधोदाहरणम् । वतोरुकारानुबन्धित्वादीप् । किंवान् । लक्ष्मीवानिति मकारान्तमकारोपधयोरुदाहरणे णितो वेत्यतो मण्डूकप्लुतिन्यायेन वानुवृत्तेर्व्यवस्थया यवादेर्न । यवमान् । भूमिमान् इत्यादि । तडितादिभ्य इति । चकारादधिकविधानार्थोक्ताडितादीनां चपानां जबा न । स्रोर्विसर्ग इत्यत्रापि स्कोराद्योश्चेत्यनन्तरसूत्राच्चकारानुवृत्तेर्मत्वर्थीयपरे यशस्वानित्यादौ विसर्गाप्रसङ्गः ॥

एतत्किंयत्तद्भ्यः परिमाणे वतुः यत्तदोरा ॥ यत्तदोष्टेरात्वं भवति वतौ परे ॥

एतत्किंयत्तद्भ्य इति । एभ्यः परिमाणेऽर्थे वतुप्रत्ययो वक्तव्यः । मान्तोपधादित्यनेनैव सिद्धे परिमाणार्थं वचनम् ॥

किमः कियश्च ॥ किम्शब्दस्य किरादेशो भवति वतौ परे । चकारात्प्रत्ययस्य वकारस्य यकारो भवति कियान् ॥ आ इश्चैतदो वा ॥ वतुप्रत्यये परे एतत्शब्दस्य आ इश् इत्येतावादेशौ भवतः । गुरुः शिच्चेति शित्त्वात्कृत्स्नस्य । आ इति गुरुस्तथापि चकारादन्त्यस्यैव टेरा-

कारादेशो भवति न कृत्स्नस्य । यस्मिन्पक्षे इशादेशस्तस्मिन्पक्षे प्रत्ययस्य वकारस्य यकारादेशो भवति । एतावान् । इयान् ॥ तुन्दादेरिलः ॥ तुन्दादेरिलप्रत्ययो भवति अस्त्यर्थे । तुन्दमस्यास्तीति तुन्दिलः॥ औन्नत्ये दन्तादुरः ॥ उन्नता दन्ता यस्य स दन्तुरः ॥ श्रद्धादेर्लुः ॥ श्रद्धादेर्गणाल्लुप्रत्ययो भवति । श्रद्धास्यास्तीति श्रद्धालुः । दयालुः। कृपालुः ॥

किम इति ।किमः किरादेशो वक्तव्यः । चकाराद्वतोर्वस्य यादेशश्चेत्यर्थः यत्तत्किं वा परिमाणमस्येति विग्रहे इयानित्यत्र चकाराद्यः ॥

अस्मायामेधास्रग्भ्योऽस्त्यर्थे विन्वक्तव्यः ॥ ❀ ॥ तपोऽस्यास्तीति तपस्वी । मायावी । मेधावी । स्रग्वी ॥

अस्मायेति । अस्मायेत्यत्रासः प्रत्ययत्वात्प्रत्ययग्रहणेन तदन्तस्येति असप्रत्ययान्तान्मायादेश्चेत्यर्थः ॥

वाचो ग्मिनिः ॥ वाग्मी ॥ आलाटौ कुत्सितभाषिणि ॥ वाचालः । वाचाटः ॥ ईषदसमाप्तौ कल्पदेश्यदेशीयाः ॥ ईषदपरिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः । पटुदेश्यः। कविदेशीयः ॥ प्रशंसायां रूपः ॥ प्रशस्तो

वैयाकरणो वैयाकरणरूपः ॥ भूतपूर्वे चरट्॥ दृष्टचरः—दृष्टचरी ॥

वाच इति। वाक्शब्दादस्त्यर्थे ग्मिनीप्रत्ययो वक्तव्यः। ग्मिनेर्गकारः अमादित्वव्यावृत्त्यर्थः। अथवा वाचो ग्मिनिरिति च्छेदे वाचो मिनिप्रत्ययः वाचश्च गकारोऽन्तादेशश्चेति वक्तव्यः। एवं च वाच इत्यस्योपलक्षणाद्गोमीत्यादावपि। आलाटाविति। कुत्सितमनन्वितं भाषितुं शीलमस्य कुत्सितभाषी तस्मिंस्तद्धितान्तवाच्ये विवक्षित इत्यर्थः। ईषदपरिसमाप्तिः किंचिन्न्यूनत्वम्। प्रशंसा प्राशस्त्यं स्तुतिरिति यावत्। पूर्वं भूतः प्राज्ञो ज्ञात इति यावत्। टकारस्येबर्थत्वात्तु दृष्टचरी ॥

प्राचुर्यविकारप्राधान्यादिषु मयट् ॥ अन्नं प्रचुरं यस्मिन् सः अन्नमयो यज्ञः। मृन्मयो घटः। स्त्रीमयो जाल्मः। अमृतमयश्चन्द्रः ॥

प्राचुर्येति। प्राचुर्यं च विकारश्च प्राधान्यादिश्च ते तथा तेषु वाच्येषु मयट्प्रत्ययो वक्तव्य इत्यर्थः। प्रचुरस्य भावः प्राचुर्यं बाहुल्यमित्यर्थः। अन्नप्रचुरोऽन्नमयः। मृदो विकारः मृन्मयः। स्त्रीप्रधानो जाल्मोऽसमीक्ष्यकारी। आदिशब्दात्ताद्रूप्येऽपि। तदेवाह। अमृतमयश्चन्द्र इति। अमृतरूप इत्यर्थः। एवमादिशब्दादेव। गोः पुरीषे मयट्। गोमयम्। मयटष्टित्त्वादन्नमयी स्थालीत्यादावीप्॥

तदधीते वेद वेत्यत्राण् वक्तव्यः॥ ❀ ॥ व्याकरणमधीते वेद वा वैयाकरणः। शोभनोऽश्वः स्वश्वः। तं वेदेति सौवश्वः॥ न सन्धियवोर्युट् च॥ सन्धिजौ य्वौ सन्धिय्वौ तयोः सन्धिय्वोः यकारवकारयोः संबन्धिनः स्वरस्य

वृद्धिर्न भवति किंतु तयोर्युडागमो भवति । इट् उट् इत्येतावागमौ भवतः । वर्णविश्लेषं कृत्वा यकारात्पूर्वमिकारः । वकारात्पूर्वमुकारः । स्वरहीनं परेण संयोज्यम् । आदिस्वरस्य ञ्णिति च वृद्धिः । वैयाकरणः । सौवश्वः ॥

तदिति । अधीते पठति तद्वेद जानाति वा इत्यर्थे अण् वक्तव्य इत्यर्थः । व्याकरणाश्वशब्दाभ्यामाणि णित्त्वात् वृद्धिप्राप्तावपवादमाह । न सन्धिय्वोरिति । सन्धेः संबन्धिनौ य्वौ सन्धिय्वौ । संबन्धश्च जन्यजनकभाव एवेति विगृह्य व्याचष्टे । सन्धिजौ य्वावित्यादि । इश्च उश्च टकारो द्वन्द्वान्तत्वादुभाभ्यामन्वेति । अत एवेट् उट् इत्येतावागमौ भवत इति । तौ च सन्धिय्वोरेव यथासंख्येन । ततश्च व्याकरण इत्यत्र वकारस्य सन्धिजत्वाद्यकारवकारयोर्विश्लेषं कृत्वा सान्धिजाद्यकारात्पूर्वमिकारः । एवं सकारवकारयोर्विश्लेषं कृत्वा वकारात्पूर्वमुकार इत्यर्थः । विश्लेषश्च बालबोधार्थं तयोरुक्तः । इकारोकारयोश्च यकारवकारजनकत्वाभावादादिवृद्धिर्भवत्येवमित्युक्तेर्वृद्धिविषय एव न । दाध्य वृश्चिक इत्यादौ नो वेत्यतो वानुवृत्तेर्व्यवस्थया स्वध्वस्वागतव्यगंव्यवहारस्वर्गव्यायामप्रभृतीनां न निषेधयुटौ । द्वारादीनां च सन्धिजत्वाभावेऽपि निषेधयुटौ । दौवारिकः । सौवस्तिकः । नैयग्रोधः । वैयासकिरित्यादि ॥

इतो जातार्थे ॥ लज्जितः । पण्डितः । तृषितः ।

तरतमेयस्विष्ठाः प्रकर्षे ॥ अतिशयेऽर्थे तर तम ईयसु इष्ठ इत्येते प्रत्यया भवन्ति । अतिशयेन कृष्णः कृष्णतरः । अतिशयेन शुक्लः । शुक्लतमः ॥ ईयस्विष्ठौ डिताविति वक्त-

व्यौ ॥ ❋ ॥ उकारो नुम्विधानार्थः । न्सम्महत इति दीर्घः अतिशयेन लघुः लघीयान् । अतिशयेन पापः पापिष्ठः—पापीयान्—पापीयसी । लघिष्ठः । लघीयसी ॥

इत इति । अस्य जातमित्यर्थे इतप्रत्ययो वक्तव्य इत्यर्थः । लज्जा जाताऽस्य लज्जितः । एवं तारंकितं नभः । पल्लवितो वृक्ष इत्यादि ज्ञेयम् । तरतमेति । तरश्च तमश्च ईयसुश्च इष्ठेश्च ते तथा । प्रकर्षोऽतिशयः । अतिशयेन कृष्णः । णितो वेत्यतो वानुवृत्तेर्व्यवस्थया । याचकतरः । याचकतम इत्यादौ तरतमावेव नेयस्विष्ठौ ॥

गुर्वादेरिष्ठेमन्नीयस्सु गरादिष्टिलोपश्च॥ गुरु प्रिय स्थिर स्फिर उरु बहुल वृद्ध दीर्घ प्रशस्य बाढ युवन् अल्प स्थूल दूर अन्तिकानां क्रमेण गर प्रस्थ स्फ वर बंहि ज्या द्राघ श्र साध यव कन स्थव दव नेद् एते आदेशा भवन्ति । अतिशयेन गुरुः गरीयान्—गरिष्ठः । गुरोर्भावो गरिमा । अतिशयेन प्रियः प्रेयान्—प्रेष्ठः । प्रेमा । अतिशयेन स्थिरः स्थेयान्—स्थविष्ठः । अतिशयेन स्फिरः स्फेयान् । अतिशयेन उरुः वरीयान् । अतिशयेन बहुलः बंहीयान् । अतिशयेन वृद्धः ॥ ईलोपो ज्याशब्दादीयसः॥ वृद्धस्य ज्या । ज्यायान्—ज्येष्ठः। अतिशयेन दीर्घः द्राघीयान्—द्राघिष्ठः । द्राघी-

यसी-द्राघिमा ॥ **प्रशस्यस्य श्रादेशः** ॥ इष्ठस्येकारस्य यिर्भवति । अतिशयेन प्रशस्यः श्रेयान्-श्रेष्ठः ॥ **ईयस ईलोपः** ॥ अतिशयेन बहुः भूयान्-भूयिष्ठः-भूयसी ॥ **दूरस्य दवादेशः** ॥ दविष्ठः-दवीयान्-दवीयसी ॥ **क्षिप्रशब्दस्य क्षेपादेशः** ॥ क्षेपिष्ठः-क्षेपीयान् ॥ **क्षुद्रशब्दस्य क्षोदादेशः** ॥ क्षोदीयान् ॥ **बहोरिष्ठेर्यिः** ॥ बहोरुत्तरस्येष्ठप्रत्ययस्येकारस्य यिर्भवति। बहोः स्थाने भूश्चादेशः। भूमा ॥ **किमोऽव्ययादाख्याताच्च तरतमयोराम्वक्तव्यः** ॥ ❀ ॥ कुतस्तरां परमाणवः । कुतस्तमां तेषामारम्भकत्वम् । उच्चैस्तरां गायति। पठतितमाम् । पचतितमाम् ॥ **अव्ययसर्वनाम्नामकच् प्राक् टेः** ॥ उच्चकैः। यकः । सकः । सर्वकः ॥

गुर्वादेरिति । अतिशयेन प्रियः प्रेष्ठः प्रियस्य भावः प्रेमा । प्रियस्य प्रादेशः स्थूलस्य स्थवादेशः। अतिशयेन स्थिरः स्थेयान्-स्थेष्ठः-स्थेमा । स्फिरः स्फेष्ठः-स्फेयान् । उरुः वरिष्ठः-वरीयान्-वरिमा । बहुलः बंहिष्ठः-बंहीयान्-बंहिमा। वृद्धः वर्षिष्ठः-वरीयान् तृप्रः त्रपिष्ठः-त्रपीयान्।वृन्दारकः वृन्दिष्ठः-वृन्दीयान्।दूरः।दविष्ठः-दवीयान् । युवा यविष्ठः-यवीयान् । ह्रस्वः ह्रसिष्ठः-ह्रसीयान्-ह्रसिमा । क्षिप्रः क्षेपिष्ठः-क्षेपीयान्-क्षेपिमा । क्षुद्रः क्षोदिष्ठः-

क्षोदीयान्—क्षोदिष्ठः । अन्तिकः नेदीयान्—नेदिष्ठः । बाढः साधीयान्—साधिष्ठः । युवाल्पयोः कन् वा । कनिष्ठः—कनीयान् । इत्यादयो यथाप्रयोगं ज्ञेयाः । ईलोप इति । प्रशस्यवृद्धयोर्ज्यादेशः तस्माज्ज्याशब्दादीयस ईकारस्य लोपो वक्तव्य इत्यर्थः । प्रशस्यस्य ज्यादेशः । बहोरिति । बहोर्लोपो भूश्च बहोरिति इष्ठेकारलोपे बहोर्भूरादेशे पदादेशन्यायेन एकदेशविकृतन्यायेन च बहोरिति इष्ठप्रत्यये परे बहुशब्दात् यिप्रत्ययो वक्तव्य इत्यर्थः । अथवा इष्ठस्य इति सांकेतिकं प्रथमान्तम् । ततश्च बहुशब्दात्परो य इष्ठेकारः स यिर्भवति । यद्वा । इष्ठे इति स्थानसप्तम्यापि आदेशे प्राप्ते आदेः परस्येति परिभाषया इकारस्य यिरादेशः । केचित्तु बहुशब्दात्परे इष्ठप्रत्यये य ईकारः स यकारयुक्तो वक्तव्य इत्याहुः । किमोऽव्ययादिति । एभ्यः एरयोरित्यर्थः । वक्तव्यत्वाद्द्रव्यप्रकर्ष एव । नेह । उच्चैस्तरस्तरुः एषां सद्भावे प्रमाणाभावात्तवारम्भकत्वेनाभिमताः परमाणवोऽतिशयेन कुतः । एवं परमाणूनामसत्त्वात्तेषां पृथिव्यादिचतुष्टयारम्भकत्वमप्यतिशयेन कुत इत्यर्थः ॥

**परिमाणे दघ्नादयः ॥ परिमाणेऽर्थे दघ्नट् द्वयसट् मात्रट् इत्येते प्रत्यया भवन्ति । जानुदघ्नं जलम् । शिरोद्वयसम् । पुरुषमात्रम् ॥**

**द्वयोर्बहूनां चैकस्य निर्द्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ ॥ * ॥**

**कतरो भवतोः काण्वः।कमतो भवतां तान्त्रिकः। भवतोर्यतरस्तार्किकस्ततर उद्गृणातु ॥**

परिमाण इति । दघ्नद्वयसमात्रादयः । तत्र दघ्नद्वयसावूर्ध्वे माने मात्रस्त्वविशेषेण आदिशब्दात्पुरुषहस्तिभ्यामेतेऽणच । पुरुषः

१ "सर्वे पदाः पाददेशा दाक्षापुत्रस्य पाणिनेः ।" इति पदादेशन्यायस्वरूपम् ॥

प्रमाणमस्य पौरुषम् । नो वेति वाशब्दव्यवस्थया टिलोपाभावे हस्तीप्रमाणमस्य हास्तिनम् । पक्षे पुरुषमात्रमित्यादि । द्वयोर्मध्ये एकस्य निर्धारणे क्रियमाणे किमादिभ्यः कियत्तद्भ्यो डतरः । एवं बहूनां मध्ये निर्द्धारणे डतम इत्यर्थः । काण्वः काण्वशाखीयः । तान्त्रिकः शास्त्रज्ञः । तर्के कुशलस्तार्किकः । उद्गृणातु स्वसिद्धान्तावलम्बेन प्रथममुपन्यस्यत्वित्यर्थः ॥

**संख्येयविशेषावधारणे द्वित्रिभ्यां तीयः ॥** द्वयोः सङ्ख्यापूरकः द्वितीयः । त्रयाणां सङ्ख्यापूरकः तृतीयः ॥ **त्रेः संप्रसारणं षट्चतुरोस्थट् ॥** षष्ठः । चतुर्थः ॥

सङ्ख्येयविशेषेति । सङ्ख्यातुमर्हं सङ्ख्येयम् । तस्य विशेषः तत्पूरकस्तस्यावधारण इत्यर्थः । द्वयोः सङ्ख्ययोः पूरकः । संप्रसारणम् । सस्वरस्य रेफस्य ऋकारः । षट्चतुरोरिति षट्चतुर्शब्दाभ्यां सङ्ख्येयविशेषावधारणे थट्प्रत्ययो वक्तव्यः । षण्णां चतुर्णां सङ्ख्यापूरण इति विग्रहे षस्य षत्वमाख्यातादौ डत्वनिषेधार्थमित्यत्रापि षविधानसामर्थ्यात्षो ड इति डत्वाप्रसङ्गः । स्रोर्विसर्गः इत्यत्र ह्रस्वो वेत्यतो मण्डूकप्लुतिन्यायेन वानुवृत्तेर्व्यवस्थया विसर्गाप्रसङ्गः ॥

**पञ्चादेर्मट् ॥** पञ्चमः । सप्तमः । अष्टमः । नवमः ॥ **विंशत्यादेर्वा तमट् ॥** विंशतितमः—विंशतिः ॥ **विंशतेस्तिलोपो डिति ॥** विंशः । त्रिंशत्तमः ॥ **शतादेर्नित्यम् ॥** शततमः ॥ **एकादशादेर्डट् ॥** एकादशः ॥

**द्वित्र्यष्टानां द्वात्रयोऽष्टाः ॥ द्वादशः । त्रयोदशः । अष्टादशः ॥ कतिकतिपयाभ्यां थः ॥ कतिथः । कतिपयथः ॥ सङ्ख्यायाः प्रकारे धा ॥ द्विप्रकारं द्विधा । चतुर्धा ॥**

पञ्चादेरिति । सङ्ख्येयविशेषावधारणे इति सर्वत्रानुवर्तते पञ्चादेर्दशपर्यन्तान्मप्रत्ययः । सप्तमः । अष्टमः । नवमः । दशमः। एकादशादेरिति निपातनादेकशब्दस्य दशशब्दे परे आत्वम् । एवं द्वादशेत्यादौ । द्वित्र्यष्टानां समासे सहादेः सादिरिति । द्वात्रयोष्टाः आशतादनशीतेः स्युः । द्वाविंशः । त्रयोविंशः । द्वात्रिंशत्त्रयस्त्रिंशच्चत्वारिंशदादौ वा । द्विचत्वारिंशत्–द्वाचत्वारिंशदित्यादि । यद्यप्येकादश इत्यादौ डित्वं विनापि नो वेति टिलोपः सम्भवति तथापि विंश इत्यादौ यस्य लोपे कृतेऽल्लोपार्थं डित्त्वमिति सन्ध्येयम् । विंश इत्यत्र वाशब्दाल्लोकाद्वा तिलोपे डित्वादल्लोपः ॥

**गुणोऽणू च ॥ द्वेधा । त्रेधा । णित्त्वाद्वृद्धिः । यस्य लोपः । अतोऽम् । द्वैधम् । त्रैधम् ॥ क्रियाया आवृत्तौ कृत्वस् ॥ पञ्चकृत्वः । सप्तकृत्वः ॥ द्वित्रिभ्यां सुः ॥ द्विः । त्रिरुक्तम् ॥ बह्वादेः शस् ॥ बहुशः । शतशः ॥**

गुणोऽणू चेति । धाप्रत्यये परे गुणो भवति । गुणविधिसामर्थ्याच्चकाराद्वा गुणाभावपक्षे धाप्रत्ययान्तादणू चकारो विकल्पार्थः । क्रियाया आवृत्तौ क्रियाभ्यावृत्तिगणने सङ्ख्यावाचकात्कृत्वस् वक्तव्य इत्यर्थः । पञ्च वारानिति पञ्चकृत्वः । द्वित्रिभ्यां सुरित्यत्रापि क्रियावृत्तावित्येव । बह्वादेरिति । बह्वादेः कारकादित्यर्थस्तेन बहूनां

स्वामीत्यादौ न । अत्रापि क्रियाभ्यावृत्तिगणन एव । भूरिशः । गणशः । स्तोकशः । अल्पशः । अनेकश इत्यादि ॥

**तयायडौ सङ्ख्यायाम्॥द्वितयम्।त्रितयम्। द्वयम्। त्रयम् ॥ शेषा निपात्याः कत्यादयः ॥ का सङ्ख्या येषां ते कति ॥**

**इति तद्धितप्रक्रिया समाप्ता।**

तयायडाविति । तयश्च अयट् च तौ सङ्ख्याया अवयवत्वविवक्षायां भवत इत्यर्थः । द्वाववयवौ त्रयो वावयवा इति विग्रहः । द्वितयी । त्रितयीत्यत्र नदादित्वादीप् । द्वयी । त्रयीत्यत्र । यटष्टित्वात् ष्ट्रित इतीप् । केचित्तु तयायडो इति पठित्वा डित्त्वाट्टिलोपे नदादित्वादेवेप् इत्याहुः । तदसत् । यस्य लोप इत्येव सिद्धे डित्त्ववैयर्थ्यप्रसङ्गात् । तद्धितप्रत्ययानामनन्तत्वात्कार्त्स्न्येनाभिधातुमशक्यत्वादनुक्तनिष्पत्त्यर्थमाह । शेषा इति । निपातात् साधवो निपात्याः । किमः सङ्ख्यापरिप्रश्ने डतिः । का संख्यैषां कति । एवं यति । तति इत्यादि प्रयोगादूह्यम् ॥

इति श्रीभट्टवासुदेवविरचिते सारस्वतप्रसादे तद्धितप्रक्रिया समाप्ता।

इति सारस्वतपूर्वार्धं समाप्तम् ।

---

पुस्तक मिलनेका ठिकाना-
गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर" छापाखाना,
कल्याण-मुंबई.

## व्याकरणग्रन्था:।

| | नाम. | | की.रु.आ. | ट.म.रु.आ. |
|---|---|---|---|---|
| ३१२ | महाभाष्य नवाह्निकमात्र .... | १ .... | २–० | ०–४ |
| ३१३ | लघुशब्देन्दुशेखर काशीके छा. .... .... | | ५–० | ०–८ |
| ३१४ | सिद्धान्तकौमुदीअष्टाध्यायी, गणपाठ, धातुपाठ, लिङ्गानुशासन पा०अक्षर मोटाजिल्द अतिउत्तम | १ | ४–० | ०–१२ |
| ३१५ | अष्टाध्यायी,गणपाठ,धातुपाठ,लिंगानुशासन | २ | १–० | ०–२ |
| ३१६ | सिद्धांतकौमुदी अतिउत्तम और बारीक टैपमें छपके तैयार है.... .... .... | २ | २–० | ०–४ |
| ३१७ | लघुसिद्धान्तकौमुदी टिप्पणीसहित जिल्द अक्षर बडा सूत्र और वृत्ति खुलासेवार है. | क | ०–१२ | ०–२ |
| ३१८ | तथा सादा जिल्द .... .... .... | क | ०–१० | ०–१॥ |
| ३१९ | लघुसिद्धान्तकौमुदी टिप्पणीसहित छोटा | क | ०–४ | ०–१ |
| ३२० | सिद्धान्तचन्द्रिका सुबोधिनीटीका और तत्त्वदीपिकासह संपूर्ण .... | १ | ४–० | ०–८ |
| ३२१ | सिद्धान्तचन्द्रिका उत्तरार्द्ध सुबोधिनी और तत्त्वदीपिकासह .... .... | २ | २–० | ०–४ |
| ३२२ | सिद्धान्तचन्द्रिका सटीक पूर्वार्द्ध सुबोधिनी और तत्त्वदीपिका टी. .... .... | २ | २–० | ०–४ |
| ३२३ | तत्त्वबोधिनी कौमुदीके पृष्ठाङ्कसह पूर्वार्द्ध | १ | २–८ | ०–६ |
| ३२४ | रूपमालाव्याकरणका षड्लिङ्गविभाग | २ | ०–६ | ०–॥ |
| ३२५ | ” सन्धिभागः, अव्ययार्थभागः प्रयोगविधिसंग्रहः ( कारकसमासतद्धितादिक ) क्रियाकलापः आख्यातचंद्रिका धातुरूपभेदः श्लोकयोजनिकोपाय .... .... | २ | १–४ | ०–२ |
| ३२६ | सन्धिविभाग .... .... .... | २ | ०–५ | ०–॥ |
| ३२७ | अव्ययार्थविभाग .... .... .... | क | ०–३ | ०–॥ |
| ३२८ | प्रयोगविधि .... .... .... .... | क | ०–२ | ०–॥ |
| ३२९ | कारकसमासतद्धितादिक क्रियाकलाप आख्यातचन्द्रिका धातुरूपभेद श्लोकयोजनिकोपाय | २ | ०–६ | ०–१ |
| ३३० | समासकुवलयाकर नियमोंके साथ उदाहरण | गो | ०–४ | ०–॥ |
| ३३१ | सारस्वतसटीक प्रसादटीका .... | क | ०–१२ | ०–२ |
| ३३२ | सारस्वतमूल पूर्वार्द्ध जिल्द टाईपका.... | क | ०–८ | ०–१ |